# आग्नेयच्छन्दःसारः।

—०ः०—

अग्निरुवाच,—

छन्दो वच्ये मूलजैस्तैः पिङ्गलोक्तं यथाक्रमम्।

(१) सर्वादिमध्यान्तगलौ म्नौ भ्यौ ज्रौ स्तौ त्रिकौ गणाः॥ १॥

(२) ह्रस्वो गुरु र्वा पादान्ते, अनुस्वाराद् विसर्गतः।

(३) पूर्वो योगाद् व्यञ्जनात् स्यात् जिह्वामूलीयत स्तथा॥ २॥

(४) उपाध्मानीयतो, दीर्घो गुरु र्लौ च, गलाविव।

(५) वसवोऽष्टौ च विज्ञेया वेदादित्यादि लोकतः॥ ३॥

इत्याग्नेये महापुराणे सप्तविंशत्यधिकशततमोऽध्यायः।

आग्नेये छन्दःसारे प्रथमोऽध्यायः॥ १॥

अग्निरुवाच,—

(६) छन्दोऽधिकारे गायत्री दैवी चैकाक्षरी भवेत्।

(७) पञ्चदशासुरी सा स्यात् प्राजापत्याष्टवर्णिका॥ १॥

---

(१) सर्वादिमध्यान्तगणौम्नौह्नौजौस्तौत्रिकौगणाः।

(२) ह्रस्वोगुरुर्वापादान्तेपूर्व्वौजोगादुविसर्गतः।

(३) अनुस्वाराद्व्यञ्जनात्स्यानात्जिह्वामूलीयतस्तथा।

(४) उपाध्मानीयतोदीर्घो गुरुर्ग्लौगणाविव।

(५) वसवोष्टौचचत्वारोवेदादित्यादिलोपतः।

(६) छन्दोधिकारेगायत्रीदेवीचैकारीभवेत्।

(७) पञ्चदशाक्षरीसास्यात्प्राजापत्याष्टवर्णिका॥

यजुषां षडर्णा गायत्री साम्नां स्याद् द्वादशाक्षरा ।
ऋचामष्टादशार्णा स्यात् साम्नां वर्धेत च द्वयम् ॥ २ ॥
(८) ऋचां त्रयश्च वर्धेत प्राजापत्या चतुष्टयम् ।
(९) वर्धेतैकैकशेषे आसुरी तु एकमुत्सृजेत् ॥ ३ ॥
उष्णिगनुष्टुब् बृहती पंक्तिस्त्रिष्टुब् जगत्यपि ।
(१०) तानि ज्ञेयानि, क्रमशो गायत्र्यो ब्राह्म्य एव ताः ॥ ४ ॥
(११) तिस्रः तिस्रः समान्यः स्युः, एकैका आर्ष्य एव च ।
(१२) प्राग्यजुषां, संज्ञाः स्युः चतुःषष्टिपदे लिखेत् ॥ ५ ॥
इत्याग्निप्रोक्ते महापुराणे अष्टाविंशत्यधिकत्रिशततमोऽध्यायः ॥
आग्नेये छन्दःसारे द्वितीयोऽध्यायः ॥ २ ॥

अग्निरुवाच,—

(१३) गायत्र्यो वसवो ज्ञेया, इत्यादि पादपूरणे ।
पादो जगत्या आदित्या, विराजो दिश ईरिताः ॥ १ ॥
(१४) त्रिष्टुभो रुद्रः पादः स्यान्, छन्द एकादिपादजम् ।
(१५) आद्यं चतुष्पाद्दतुभि, स्त्रिपात् सप्ताक्षरैः क्वचित् ॥ २ ॥
(१६) सा गायत्री पादनिवृत्, तदन्याद्यादिषट् त्रिपात् ।
(१७) वर्धमाना षट्सप्ताष्टा, नागी षड्नवकद्वयैः ॥ ३ ॥

---

(८) ऋचा तुर्यंचवर्धेतप्राजापत्याचतुष्टयम् ।
(९) वर्द्धे दे कै कशे षे आसुर्यादे कमुत्सृजेत् ।
(१०) तानिज्ञेयानिक्रमशोगायत्र्योब्रह्मएवताः ।
(११) तिस्रःतिस्रसमान्यःस्युरेकै काआर्य्यएवच ।
(१२) ऋगयजुषा सं ज्ञाद्य: चतुःषष्टिपदे लिखेत् ॥
(१३) गायत्र्योवसवोज्ञेयाःपादआपादपूरणे ।
(१४) विष्णुतोरुद्रःपादःस्याच्छन्द एकादिपादजम् ।
(१५) आद्यं चतुपाद्दतुभिं स्त्रिपातृसप्ताक्षरै :क्वचित् ।
(१६) सागायत्रीपदेनीवृतृततृप्रतिष्ठादिषट्त्रिपातृ ।
(१७) वर्द्धमानषड्ष्टाष्टात्रिपातृ षड्वसुभूधरैः ।

(१८) वाराही रसहिरन्ध्रा, छन्दश्चाथ तृतीयकम्।
द्विपाद् द्वादशवस्वन्तैः, त्रिपात् तु त्रैष्टुभैः स्मृतम्॥ ४॥
(१९) उष्णिक् छन्दोऽष्टवस्वर्कैः पादैर्वेदे प्रकीर्तितः।
(२०) ककुबुष्णिग् वसुसूर्याष्टवस्वर्णैश्च त्रिपाद् भवेत्॥ ५॥
(पुर उष्णिक् पुरतश्चेद् जागतो पाद ईरितः।)
(२१) परोष्णिक् परतस्तस्मात् चतुष्पाद्दृषिभिर्भवेत्।
साष्टाक्षरैरनुष्टुप् स्यात् चतुष्पाच्च, त्रिपात् क्वचित्॥ ६॥
अर्कार्कसूर्याष्टवर्णैः स्यान् मध्येऽन्ते च क्वचिद्भवेत्।
(२२) बृहती जागतस्त्रयो गायत्र्याः, पूर्वको यदि॥ ७॥
(२३) तृतीयः पथ्या भवति, द्वितीयो न्यङ्कुसारिणी।
(२४) स्कन्धोग्रीवी क्रौष्टुकेः स्यात् पद्ये उरोबृहत्यपि॥ ८॥
(२५) उपरिष्टाद् बृहत्यन्ते, पुरस्ताद् बृहती पुरः।
(२६) क्वचिन् नवकाश्चत्वारो दिग्दिग्वसुष्टवर्णिका॥ ९॥
(२७) महाबृहती जागतैः स्यात् त्रिभिः, सतो बृहत्यपि।
(२८) ताण्डिनः, पङ्क्तिच्छन्दः स्यात् सूर्यार्काष्टाष्टवर्णकैः॥ १०॥
(२९) पूर्वौ चेदयुजौ सतः पङ्क्तिश्च विपरीतकौ।

---

(१८) वाराहीरसहिरसाछन्दश्चाथतृतीयकम्।
(१९) उष्टिकछन्दोहष्टवस्तुकैःपादैर्वेदे प्रकीर्त्तितः।
(२०) ककुबुष्टिक सूर्यवसवस्वनैश्चत्रिपादूभवेत्।
(२१) परोष्णिक परतस्तस्मातृचतुष्पादातृत्रिभिर्भवेत्।
(२२) बृहतीजगत्यास्त्रयोगायत्र्याःपूर्व्वकोयदि॥
(२३) तृतीयःपथ्याभवतिद्वितीयान्यकुसारिणी।
(२४) स्कन्धोग्रीवाक्रौष्टुकेस्यापद्येस्यादौबृहत्यपि॥
(२५) उपरिष्टादबृहत्यन्तेपुरस्तादूबृहतीपुमः।
(२६) क्वचिन्नवकाश्चत्वारोदिदिग्विसुष्टवर्णिकाः।
(२७) महाबृहतीजागतैःस्यातृत्रिभिस्यातोबृहत्यपि।
(२८) भण्डिलःपङ्क्तिछन्दःस्यातूसूर्यार्काष्टाष्टवर्णकैः॥
(२९) पूर्वौ वेदयुजौसत पङ्क्तिश्च विपरीतकौ।

प्रस्तारपंक्तिः पुरतः, परादास्तारपङ्क्तिका ॥ ११ ॥
( विष्टारपंक्तिरन्तश्चेद् वहिः संस्तारपंक्तिका । )
अक्षरपंक्तिः पञ्चका श्चत्वार, श्चाल्पशो द्वयम् ।
( ३० ) पदपंक्तिः पञ्च भवेच्चतुष्कं षट्ककं त्रयम् ॥ १२ ॥
( ३१ ) पथ्या पञ्चभि र्गायत्रैः षड्भिश्च जगती भवेत् ।
एकेन त्रिष्टुब् ज्योतिष्मती तथैव जगतीरिता ॥ १३ ॥
( ३२ ) पुरस्ताज्ज्योतिः प्रथमे मध्ये ज्योतिस्तु मध्यतः ।
उपरिष्टाज्ज्योतिरन्त्याद्, एकस्मिन् पञ्चके तथा ॥ १४ ॥
( ३३ ) भवेच्छन्दः शङ्कुमती, षट्के छन्दः ककुम्मती ।
( ३४ ) त्रिपादणिष्ठमध्या स्यात् सा पिपीलिकमध्यमा ॥ १५ ॥
( ३५ ) विपरीता यवमध्या, निवृदेकेन वर्जिता ।
( ३६ ) भुरिगेकेनाधिकेन, द्विहीना च विराड् भवेत् ॥ १६ ॥
स्वराट् स्याद् द्वाभ्यामधिकं, सन्दिग्धो देवतादितः ।
आदिपादान् निश्चयः स्यात् छन्दसां देवताः क्रमात् ॥ १७ ॥
( ३७ ) अग्निः सूर्य्यः शशी जीवो वरुणश्चेन्द्र एव च ।
विश्वे देवाश्च, षड्जाद्याः स्वराः षड्जो वृषः क्रमात् ॥ १८ ॥
गान्धारो मध्यमश्चैव पञ्चमो धैवतस्तथा ।
( ३८ ) निषादः, वर्णाः श्वेतश्च सारङ्गश्च पिशङ्गकः ॥ १९ ॥

---

(३०) पदपंक्तिःपञ्चभवेच्चतुष्कंषटककत्रयम् ।
(३१) षटकपञ्चभिगायत्रैः षड्भिश्चजगतीभवेत् ।
(३२) पुरस्ताज्ज्योतिःप्रथमेमध्येज्योतिष्त्रमध्यतः ।
(३३) भवेच्छन्दःशङ्कुमतीषट्कैछन्दःककुम्मती ।
(३४) त्रिपादणिष्ठमध्यास्यात्सपीपीलिकमध्यगा ।
(३५) विपरीतायवमध्यानिवृदेकेनवर्जिता ।
(३५) भूमिर्जेकेनाधिकेनद्विहीनाचविराड्भवेत् ।
(३६) अग्निःसूर्यःशशीजीवोवरुणश्चन्द्रएवच ॥
(३८) निषादवर्णाःश्वेतश्चसारङ्गश्चपिशङ्गकः ।

कृष्णो नीलो लोहितश्च गौरो गायत्रीमुख्यके।

( ३९ ) ... ... ... ... ... ...

( ४० ) अग्निवेश्यः काश्यपश्च गौतमाङ्गिरसौ क्रमात्।

भार्गवः कौशिकश्चैव वाशिष्ठो गोत्रमीरितम्॥ २०॥

इत्यग्निप्रोक्ते महापुराणे एकोनत्रिंशदधिकत्रिशततमोऽध्यायः॥

आग्नेये छन्दःसारे तृतीयोऽध्यायः॥ ३॥

---

अग्निरुवाच,—

चतुःशतमुत्कृतिः स्यादुत्कृतेश्चतुर स्त्यजेत्।

( ४१ ) अभिसंख्याप्रेभ्यः कृति स्तानि छन्दांसि वै पृथक्॥ १॥

( ४२ ) कृतिश्चातिधृतिधृती अत्यष्टिश्चाष्टिरित्यतः।

( ४३ ) अतिशक्करी शक्कर्य्यतिजगती जगत्यपि॥ २॥

छन्दोऽत्र लौकिकं स्याच्च आर्षमात्रिष्टुभात् स्मृतम्।

( ? ) त्रिष्टुप् पंक्ती च बृहती अनुष्टुबुष्णिगीरितम्॥ ३॥

( ? ) गायत्री स्यात् सुप्रतिष्ठा प्रतिष्ठा मध्यया सह।

( ४४ ) (?) अत्युक्तयोक्ता आदिश्च एकैकाक्षरवर्जितम्॥ ४॥

चतुर्भागो भवेत् पादो, गणच्छन्दः प्रदर्श्यते।

( ४५ ) तावन्तः समुद्रा गणो, ह्यादिमध्यान्तसर्वगाः॥ ५॥

( ४६ ) चतुर्लः पञ्च च गणा, आर्यालक्षणमुच्यते।

---

(३९) गोरोचनाभाःकृतयोज्ञेयोतिश्छन्दोङ्घिश्यामलम्।

(४०) अग्निवैश्यःकाश्यपश्चगौतमाङ्गिरसौक्रमात्।

(४१) अभिसंख्याप्रेत्यकृतिस्तानिछन्दांसिवै पृथक्।

(४२) कृतिश्चातिधृतिर्धृतीअत्यष्टिश्चाष्टिरित्यतः।

(४३) अतिशक्करीशक्करीतिअतिजगतीजगत्यपि।

(४४) अत्युक्तात्युक्तआदिश्चएकैकाक्षरवर्जितम्।

(४५) तावन्तःसमुद्रागणाह्यादिमध्यान्तसर्वगाः।

(४६) चतुस्तःपञ्चचगणाआर्यालक्षणमच्यते।

( ४७ ) स्वरा अर्धं चार्यार्धं सप्तादार्यायां विषमे न जः ॥ ६ ॥
( ४८ ) षष्ठो जो नलघू वा स्याद् द्वितीयादि पदं नले ।
सप्तमेऽन्ते प्रथमादि, द्वितीये पञ्चमे नले ॥ ७ ॥
( ४९ ) अर्द्धे पदं प्रथमादि षष्ठ एको लघु भवेत् ।
( ५० ) त्रिषु गणेषु पादः स्यादार्या पथ्यार्धके स्मृता ॥ ८ ॥
विपुलान्याथ चपला गुरुमध्यगतौ च जौ ।
द्वितीयचतुर्थौ, पूर्वे च चपला मुखपूर्विका ॥ ९ ॥
( ५१ ) द्वितीये जघनपूर्वा चपलार्येत्र प्रकीर्त्तिता ।
( ५२ ) उभयो र्महाचपला, गीतिरार्द्यार्धतुल्यका ॥ १० ॥
अन्त्येनार्धनोपगीतिरुद्गीतिश्चोत्क्रमात् स्मृता ।
( ५३ ) अर्धे वसुगणा आर्यागीति, स्कन्दोऽथ मात्रया ॥ ११ ॥
( ५४ ) वैतालीयं द्विस्वरा स्यादयुक्पादे समे युजः ।
( ५५ ) वसवोऽन्ते रलगाश्च, गौपच्छन्दसकं भवेत् ॥ १२ ॥
( ५६ ) भगगान्तापातलिका, शेषे परेण पूर्ववत् ।
( ५७ ) न साकं षट् चामिश्रा युक्, प्राचवृत्तिः प्रदर्श्यते ॥ १३ ॥

---

(४७) स्वाराद्धं ऽगार्याद्धं स्यादार्यायां विषमे नजः ।
(४८) षष्ठोजोनलपूर्वास्याद्द्वितीयादिपदं नले ।
(४९) अर्द्धे पदं प्रथमादिषष्ठएकोलघु भवेत् ।
(५०) त्रिषु गुणेषु पादःस्यादार्यापश्चार्धे केस्मृता ।
(५१) द्वितीयजघनपूर्वाचपलार्याप्रकीर्त्तिता ।
(५२) उभयोर्महाचपलागीतवादयार्थं तुलयका ।
(५३) अर्द्धे रवगणाआर्यागीतस्कन्देऽथमात्रया ।
(५४) वैतालीयंद्विस्वरास्यादयुग्मादे समेनलः ।
(५५) वसवान्ते रनगाश्चगोपुच्छंदसकं भवेत् ।
(५६) भगणान्तापाटलिकाशे परे चपूर्ववत् ।
(५७) साकं षड् चामिश्रायुक्प्राचवृत्ति प्रदर्श्यते ।

(५८) पञ्चमेन पूर्वः साकं तृतीयेन सह चायुक्।
(५९) उदीच्यवृत्तिः, आभ्यां स्याद् युगपच्च प्रवृत्तकम् ॥ १४ ॥
(६०) अयुक् चारुहासिनी स्याद्, युगपदान्तिका भवेत्।
(६१) गन्ता द्विर्वसवश्चैव मात्रासमकमीरितम् ॥ १५ ॥
(६२) भवेल् लो नवमो, लश्च द्वादशो वानवासिका ।
(६३) विश्लोकः पञ्चमाष्टमौ, चित्रा नवमकश्च लः ॥ १६ ॥
परयुक्तेनोपचित्रा, पादाकुलकमितयतः ।
(६४) गीतार्यया लो, गश्चेत् सौम्या, लः पूर्वो ज्योतिरीरिता ॥ १७ ॥
(६५) स्याच्छिखा विपर्यस्तार्धा, चूलिका समुदाहृता ।
(६६) एकोनत्रिंशदन्ते गः, लां येन न समा गलाः ।
(६७) गुरोरितेयव सङ्ख्या सा वर्णाज्ज्ञेया विपर्ययात् ॥ १८ ॥
इत्याग्नेये महापुराणे त्रिंशदधिकशततमोऽध्यायः ॥
आग्नेये छन्दःसारे चतुर्थोऽध्यायः ॥ ४ ॥

---

अग्निरुवाच,—

वृत्तं समं चार्धसमं विषमञ्च त्रिधा वदे ।

---

(५८) पञ्चमेनपूर्वसाकंतृतीयेनसहस्वयुक् ।
(५९) उदीच्यवृत्तिर्वाच्या स्यातयुगपच्चप्रवर्त्तकम् ।
(६०) अयुक्चारुहासिनीस्याद्युगपद्यान्तिकाभवेत् ।
(६१) सप्तार्चिर्वसवश्चैवमात्रासमकमीरितम् ।
(६२) भवेन्नलनमौलश्चद्वादशोवानवासिका ।
(६३) विश्लोकःपञ्चमाष्टौमौचित्रालवमकश्चलः ।
(६४ गीतार्यालोपश्चेतृसौम्यालःपूर्वाज्योतिरीरिता ।
(६५) स्याच्छिखाविपर्यस्तार्द्धात्रूलिकासमुदाहृता ।
(६६) एकोनत्रिंशन्तेगःस्याजश्चेजनसमावला ।
(६७) गुरित्येकपरंसख्यावर्णातविपर्ययात् ।

(६८) समं तावत्तल्लवः क्षतमर्द्धसमञ्चाकारयेत् ॥ १ ॥
(६९) विषमञ्च रामूग्नं, गलहृत्तं समान्यपि।
(७०) ल्गौ चतुः प्रमाणी स्यात्, आभ्यामन्यद् वितानकम् ॥ २ ॥
(७१) पादस्यानुष्टुब् वक्त्रं स्यात् सनौ न प्रथमात् स्मृतौ।
(७२) वान्यद् यच्चतुर्थाद् वर्णात्, पथ्या ज्ञेया युजो जतः ॥ ३ ॥
(७३) विपरीता अथान्येषां, चपला अयुजस्तु नः।
(७४) विपुला युग्लः सप्तमः सर्वं तत् सैतवस्य च ॥ ४ ॥
(७५) भ्रौ न्तौ वा विपुलानेका वक्त्रजातिः समीरिता।
भवेत् पदचतुरर्धं चतुर्वृद्धया पदेषु च ॥ ५ ॥
(७६) गुरुद्वयान्त आपीड़ः, प्रत्यापीड़ो गगादिकः।
(७७) प्रथमस्य विपर्यासे मञ्जरी लवली क्रमात् ॥ ६ ॥
(७८) भवेदमृतधाराख्या उद्‌गताद्यचत्रतेऽधुना।
(७९) एकतः सजसलाः स्युर्नसौ जो गोऽथ भो नजौ ॥ ७ ॥
(८०) लो गोऽथ सजसा जो ग स्तृतीयचरणस्य तु।

---

(६८) समंतावत्तल्लक्षतमर्द्धं समञ्चाकारयेत्।
(६९) विषमञ्चवास्त्रग्नमलिहृत्तं समान्यपि।
(७०) ग्लौचतुःप्रमाणीस्यादाभ्यामन्यद्वितानकम्।
(७१) पादस्याद्यन्लवक्त्रं स्यान्नौनप्रथमास्तृतौ।
(७२) बालत्रमुचतुर्थाद्वर्णात्पथ्यावर्णा युग्मेयतः।
(७३) विपरीतपथ्याम्यासाचपलावायुजस्तनः।
(७४) विपुलायुग्नसप्तमःसर्वतस्तैं वतस्यच।
(७५) तौन्तौवाविपुलानेकाचक्रयातिःसमीरिता।
(७६) गुरुद्वयान्तआपीड़ःप्रत्यापीड़ोगणादिकः।
(७७) प्रथमस्यविपर्यासेमञ्जरीलवणीक्रमात्।
(७८) भवेदमृतधाराख्याउद्गताद्यचत्रतेऽधुना।
(७९) एकतःसमसजसानःस्युर्नसौजोगोऽथभौनजौ।
(८०) नोगोऽथसमजागोगस्तृतीयचरणस्य।

(८१) सौरभकं रनभगा, ललितञ्च ननौ ससौ ॥ ८ ॥
(८२) उपस्थितप्रचुपितं प्रथगाद्यं मसौ जभौ।
(८३) गो गोऽथ सनजा रो गः, नौ सोऽथ ननना जयौ ॥ ९ ॥
(८४) वर्धमानं नौ स्नौ नसौ अथो तो जो र ईरिता।
शुद्धविराडार्षभाख्यं वच्चे चार्धसमं ततः ॥ १० ॥
इत्याग्निप्रोक्ते महापुराणे विषमकथनं नाम एकत्रिंशदधिक-
त्रिशततमोऽध्यायः ॥
आग्नेये छन्दःसारे पञ्चमोऽध्यायः ॥ ५ ॥

---

अग्निरुवाच,—

(८५) उपचित्रकं ससलगा गोऽथ भो भभगा गथ।
(८६) द्रुतमध्या भभभगा गथो नजजयाः स्मृता ॥ १ ॥
(८७) वेगवती सससगा भभभगा गथो स्मृता।
(८८) भद्रविराट् तजरगा मसजा गो गथ स्मृता ॥ २ ॥
(८९) सजसा गोऽथ भो रो नो गो गो वै केतुमत्यपि।
(९०) आख्यानिकी ततजगा गथो जतजगा गथ ॥ ३ ॥
(९१) सौ सलौ गथ नौ भो भ्रौ भवेद्धरिणवल्लभा।
(९२) नौ रलौ गथ नजजा रः स्यादपरवक्त्रकम् ॥ ४ ॥
(९३) पुष्पिताग्रा ननरया नजजा रो गथो, रजौ।
(९४) रो जथो जरजा रो गो युजि यवमती, शिखा ॥ ५ ॥
(९५) अष्टाविंशतिला गान्ता त्रिंशल्लान्तगतो युजि।
(९६) खञ्जा तद्विपरीता स्यात् समस्तं प्रदर्श्यते ॥ ६ ॥
इत्याग्निप्रोक्ते महापुराणे अर्धसमवर्णनं नाम
द्वात्रिंशदधिकत्रिशततमोऽध्यायः ॥
आग्नेये छन्दसारे षष्ठोऽध्यायः ॥ ६ ॥

---

अग्निरुवाच,—

( ९८ ) यति विच्छेद इत्युक्त स्तनुमध्या तयौ गणौ ।
( ९८ ) ज्सौ गः कुमारललिता, भौ गौ चित्रपदा स्मृता ॥ १ ॥
( ९९ ) विद्युन्माला ममगगा, गणौ भंतलगै र्भवेत् ।
( १०० ) मानवकाक्रीड़ितकं, नौ सो हलमुखी स्मृता ॥ २ ॥
( १ ) नौम् भुजङ्गशिशुभृता, म्नौ गौ हंसरुतं तथा ।
( २ ) भवेच्छुद्धविराड् वृत्तं प्रतिपादं मसौ जगौ ॥ ३ ॥
( ३ ) पणवो मनया गः स्यात्, जौं गौं मयूरसारिणी ।
( ४ ) मत्ता मभसगा वृत्तं, तजजा ग उपस्थिता ॥ ४ ॥
( ५ ) रुक्मवती भमसगा, इन्द्रवज्रा ततौ जगौ ग् ।
( ६ ) जतौ जगौ गूपपूर्वा, आद्यन्तावुपजातयः ॥ ५ ॥
( ७ ) दोधकं भभभा गौ स्यात्, शालिनी मतता गगौ ।
( ८ ) चतुःस्वरा स्याद्, भ्रमरविलसिता मभौ नलौ ग् ॥ ६ ॥
( ९ ) समुद्रा अथ ऋषयो, नौ रलौ गो रथोद्धता ।
( १० ) स्वागता रनभा गो गो, वृत्ता ननसगाश्च गः ॥ ७ ॥
( ११ ) श्येनी रजरला गो वातोर्मी मभतगा गय ।
( १२ ) जगती, वंशस्था वृत्तं जतौ ज्रौ, अथ तौ जरौ ॥ ८ ॥
इन्द्रवंशा, तोटकं सै श्चतुर्भिः प्रतिपादतः ॥
( १३ ) भवेद् द्रुतविलम्बिता नभौ भरौ, अथो ननौ ॥ ९ ॥
( १४ ) य्यौ श्रीपुटो वसुवेदा, जलोद्धतगति र्जसौ ।
(१५ ) जसौ रसर्तवश्चाथ, ततं ननमराः स्मृतम् ॥ १० ॥
( १६ ) कुसुमविचित्रा न्यौ नो यो, नौ रौ स्याच्चञ्चलाचिका ।
( १७ ) भुजङ्गप्रयातं यैः स्याच्चतुर्भिः, स्रग्विणी च रैः ॥ ११ ॥
( १८ ) प्रमिताक्षरा सजौ सौ, कान्तोत्पीड़ा भमौ समौ ।
( १९ ) वैश्वदेवी ममयया: पञ्चाश्वा, नवमालिनी ॥ १२ ॥
( २० ) नजौ भयौ प्रतिपादं गणा, अतिजगत्यपि ।

( २१ ) प्रहर्षिणी मनजरा गो यति र्वह्निदिनु च ॥ १३ ॥
( २२ ) रुचिरा जभसजगा श्छिन्ना वेदैर्ग्रहैः स्मृता ।
मत्तमयूरं मतयाः सगौ वेदग्रहे यतिः ॥ १४ ॥
( २३ ) गौरी नननसा गः स्याद्, असम्बाधा मतौ नसौ ।
( २४ ) गो ग इन्द्रियनवकौ, ननौ रसलगाः स्वराः ॥ १५ ॥
( २५ ) स्वराश्चापराजिता स्यान्, ननभा नलगाः स्वराः ।
( २६ ) द्विः प्रहरणकलिता, वसन्ततिलका तभौ ॥ १६ ॥
जौ गौ, सिंहोन्नता सा स्यान् मुनेरुद्धर्षिणी च सा ।
( २७ ) चन्द्रवर्त्मा नननाः सो, मालतुनवकः स्मृतः ॥ १७ ॥
( २८ ) मणिगुणनिकरासौ, मालिनी ननौ मयौ यः ।
( २९ ) यति र्वसुस्वरा, भो रो नननगाः स्वरग्रहाः ॥ १८ ॥
( ३० ) ऋषभगजविलसितं, ज्ञेया शिखरिणी यमौ ।
(नसौ भ्लौ ग ऋतुभी रुद्रैः, पृथ्वी जसौ जसौ यलौ ।)
गो वसुग्रहविच्छिन्ना पिङ्गलेनेरिता पुरा ॥ १९ ॥
( ३१ ) वंशपत्रपतितं स्याद् भरना भ्नौ लगौ सदिक् ।
( ३२ ) हरिणी नसमा रः सो लगौ रसचतुःस्वराः ॥ २० ॥
( ३३ ) मन्दाक्रान्ता मभनता स्तगौ गब्धिरसस्वराः ।
( ३४ ) कुसुमितलतावेल्लिता मतना: ययौ शराः ॥ २१ ॥
( ३५ ) रसाः स्वराः प्रतिपादं, मसजाः सततास्च गः ।
शार्दूलविक्रीड़ितं स्यादादित्यमुनयो यतिः ॥ २२ ॥
( ३६ ) कृतिः, सुवदना मो रो भनया भलगाः स्वराः ।
( ३७ ) यतिर्मुनिरसा श्चाथ, श्लिति वृत्तं क्रमात् स्मृतम् ॥ २३ ॥
( ३८ ) स्रग्धरा मरभा नो यो ययौ त्रिःसप्तका यतिः ।
( ३९ ) मद्रकं भरना रो नो रनगा दृशभास्कराः ॥ २४ ॥
( ४० ) अश्वललितं नजभा जभजा भलगोश्ततः ।
( ४१ ) मत्ताक्रीड़ा ममतना नौ नलौ गोऽष्टमतिथिः ॥ २५ ॥

( ४२ ) तनूौ भतनसा भो भो नयौ वाणस्वराङ्कितः।
( ४३ ) क्रौञ्चपदा भमसभा नौ नौ ग् वाणशराष्टतः॥ २६॥
( ४४ ) भुजङ्गविजृम्भितं ममतना ननरा सलौ।
( ४५ ) गष्टै शमुनिभिश्छेदो, ह्यपवाहाख्यमीदृशम्॥ २७॥
( ४६ ) मनना ननना नः सो गगौ शच्चतुरसात्।
( ४७ ) नौ सप्त रो दण्डकः स्याच्चण्डवृष्टिप्रपातकम्॥ २८॥
( ५८ ) रेफवृद्ध्यार्णार्णवौ सुत्र व्यालजीमूतमुख्यकाः।
शेषे वै प्रचिता ज्ञेया गाथाप्रस्तार उच्यते॥ २९॥

इत्याग्नेये महापुराणे समवृत्तवर्णनं नाम त्रयस्त्रिंश-
दधिकत्रिशततमोऽध्यायः॥

आग्नेये छन्दःसारे सप्तमोऽध्यायः॥ ७॥

अग्निरुवाच,—

( ४९ ) छन्दोऽत्रासिद्धं गाथा स्यात्, पादे सर्वगुरौ तथा।
( ५० ) प्रस्तार आद्यगोऽधो लः परतुल्योऽथ पूर्वगः॥ १॥
( ५१ ) नष्टमध्ये समेऽङ्के लः समेऽर्धे विषमे गुरुः।
( ५२ ) प्रतिलोमगुणं लाद्यं द्विरुद्दिष्टक एकनुत्॥ २॥
( ५२ ) सङ्ख्या द्विरर्धे, रूपे शून्यं, शून्ये द्विरीरितम्।
( ५४ ) तावदर्धे तद्गुणितं, द्वि द्व्यूनन्तु तदन्ततः॥ ३॥
परे पूर्णं परे पूर्णं मेरुः प्रस्तारतो भवेत्।
( ५५ ) लगसङ्ख्या वृत्तसङ्ख्या चाद्याङ्गुलमयोर्ध्वतः॥
( ५६ ) सङ्ख्यैव द्विगुणैकोना छन्दःसारोऽयमीरितः॥ ४॥

इत्याग्निप्रोक्ते महापुराणे प्रस्तारनिरूपणं नाम चतुस्त्रिंश-
दधिकत्रिशततमोऽध्यायः॥

आग्नेये छन्दःसारेऽष्टमोऽध्यायः॥ ८॥

---

समाप्तश्च।

श्रीनारायणभट्टविरचितया व्याख्यया

सहितम्

# वृत्तरत्नाकरम् ।

अनुक्रमः ।

## Explanations.

A. *Taranatha* Tarkav*a*caspati's edition.

B. Beneres Edition with Hari Bh*a*skara's commentary.

D. The ordinary Beneres Edition.

P. Visvan*a*tha Sh*a*str*i*'s edition of Pingala with Hal*a*yudha.

Pr*a*. or प्रा० पि०. Pr*a*k*r*ta Pingala with Ravikara's commentary lent by a Beneres Pandit.

( ) indicates that such passages have been supplied by me.

# सटीकं वृत्तरत्नाकरम्।

—०ः०—

श्रीगणेशाय नमः। श्रीगुरुभ्यो नमः।

नत्वा गणेशं वाग्देवीं पिङ्गलं मातरं गुरुम्। अन्यानपि च भाष्यादिकर्तृंश्छन्दोविशारदान्॥ १॥ श्रीभट्टरामेश्वरसूरिसूनुर्नारायणः स्वामनिचय बुद्धिम्। संक्षेपवृत्त्या विवृतिं सुवृत्तरत्नाकरे व्यक्ततया तनोति॥ २॥ विशिष्टशिष्टाचारमूलभूत "स्वस्ति न इन्द्रो वृद्धश्रवा" इत्यादिवैदिकलिङ्गकल्पितश्रुतिप्रमाणकविशिष्टेष्टदेवतानमस्कारजनितनिर्विघ्नतादिः स्वनामकीर्त्तनपूर्व्वकं स्वग्रन्थस्य ग्रन्थान्तरैरधिगतार्थताञ्च सूचयन् सप्रयोजनं कर्त्तव्यं सामान्यज्ञानपूर्व्वकविशेषजिज्ञासुप्रवृत्तिसिद्ध्यर्थं सामान्यतः प्रतिजानीते सुखेत्यादिश्लोकत्रयेण।

सुखसन्तानसिद्ध्यर्थं नत्वा ब्रह्माच्युतार्च्चितम्।
गौरीविनायकोपेतं शङ्करं लोकशङ्करम्॥ १॥
वेदार्थशैवशास्त्रज्ञः * पवेत्रकोऽभूद्द्विजोत्तमः। * पठेत्रकः। A.
तस्य पुत्रोऽस्ति केदारः शिवपादार्च्चने रतः॥ २॥
तेनेदं क्रियते छन्दो लक्ष्यलक्षणसंयुतम्।
वृत्तरत्नाकरं नाम बालानां सुखसिद्धये॥ ३॥

ब्रह्माच्युताभ्यां विधातृविष्णुभ्यां अर्च्चितं पूजितं गौर्य्या पार्व्वत्या विनायकेन गणाधिपेन चोपेतं लोकानां चतुर्द्दशभुवनानां भूरादीनां सप्तानां वा शङ्करं सुखकर्त्तारं एवंविधं शङ्करं महादेवं सुखसन्तानसिद्ध्यर्थं

प्रणामजनिताविघ्नतादिसम्भूताव्याकुलीभावबुद्धिवैभवादिजनितसुखपरम्परा-प्राप्त्यर्थं तेन केदारेण इदं छन्दः क्रियत इति तृतीयश्लोकेनान्वयः। वेदानाम् ऋगादीनामर्थं शैवशास्त्राणि च रुद्रयामलादीनि जानातीत्येवंविधः पव्येकसंज्ञो द्विजोत्तमो ब्राह्मणोत्तमोऽभूत्। तस्य पुत्रः केदारनामा शिवचरणारविन्दपूजनतत्परोऽस्ति लक्ष्योदाहरणेन मात्रावर्णान्यतरनियतात्मकेन छन्दसा लक्षणेन च तन्नियमकथनात्मकेन छन्दसा तदभिन्नेन युक्तं लक्ष्यमेव लक्षणमिति विग्रहः वृत्तरत्नानामाकरः खनि र्यत्र तत् यद्वा आकरः समूहो यत्र 'आकरो निवहोत्पत्तिस्थानश्रेष्ठे' कथ्यते इति विश्वप्रकाशोक्तेः। एतयैवान्वर्थसंज्ञया नाम प्रसिद्धं छन्दस्तत्प्रतिपादकत्वात्सूचितं तच्छास्त्रं बालानां छन्दःशास्त्राज्ञानानां सुखेनाल्पोपायेन सिद्धये छन्दोज्ञानार्थं क्रियत इत्यर्थः। सुखपदस्य प्रथमप्रयोगादेतच्छ्रवणेन श्रोतॄणां सुखातिशयः सूचितः। यद्वा बालप्रतिपत्तेः प्रयोजनत्वेऽपि स्वप्रयोजनत्वाभावादेतद्ग्रन्थजनितबालव्युत्पत्तिजनितोपकारादृष्टेन जनिष्यमाणस्वर्गादिसुखपरम्परैव स्वेष्टस्वग्रन्थप्रयोजनत्वेनानेन निर्दिश्यते। ब्रह्मविष्णुगौरीविनायकम् तेन मङ्गलान्तरं तदनु स्मृतिसंरूपं सूचितम्। शङ्करमित्यत्र शंशब्दस्याव्ययत्वाद्विभक्त्यन्तत्वाभावात् सुपो धातुप्रातिपदिकयोरिति न भवति। द्विजोत्तमग्रहणेन च ब्राह्मणकर्तृत्वादेतस्य ग्रन्थस्य श्रवणे दोषाभावः सूचितः। लक्ष्यत्यादीनां लक्ष्येभ्यः काव्यादिभ्यः केवललक्षणेभ्यश्च सूत्रादिभ्यो भिन्नलक्ष्यलक्षणेभ्यश्च वृत्तादिभ्यो ऽतिशय इति सूचितः। एवं सामान्यतो ग्रन्थकरणं प्रतिज्ञाय पूर्व्वाचार्य्योक्तिमूलकतया स्वकल्पितताशङ्काजनितश्रोत्वनादरं निराकर्त्तुं प्रतिपाद्यमर्थविशेषतः प्रतिजानीते।

पिङ्गलादिभिराचार्य्यैर्यदुक्तं लौकिकं द्विधा।

मात्रावर्णविभेदेन छन्दस्तदिह कथ्यते ॥ ४ ॥ इति।

पिङ्गलेन सूत्रकर्त्रा आदिपदाद् भाष्यकारादिभिश्चाचार्य्यैरवधेयवचनै र्यल्लौकिकं छन्दो मात्रावर्णविभेदेन इदं मात्राच्छन्द आर्य्यादि इदं

वर्णच्छन्दः समान्यादीति भेदेन द्विधा द्विप्रकारमुक्तं तच्छन्द इह ग्रन्थे कथ्यत इत्यर्थः। लौकिकशब्देन वेदवेदाङ्गानधिकारिणामत्नैवर्णिकानामप्यस्मिन् ग्रन्थे अधिकार इति दर्शयति। मात्रावर्णग्रहणेन मात्राच्छन्दो गणच्छन्द इति कैश्चिदुक्तो द्वेधा विभागः पराकृतः,तादृशविभागे च गणच्छन्दसामपि संग्रहादिति भावः। अन्यत्र तु गणमात्राक्षरच्छन्दस्त्वेन त्रैविध्यमाहुः यदुक्तं "आदौ तावद्गणच्छन्दो मात्राच्छन्दस्ततः परम्। तृतीयमक्षरच्छन्दश्छन्दस्त्रेधा तु लौकिकम्"इति। गणच्छन्द आर्यादि, मात्राच्छन्दो वैतालीयादि, अक्षरच्छन्दः समान्यादीति अन्यकर्तृकसम्भावितच्छन्दोऽन्तःप्रक्षेपनिक्षेपनिराकरणाय ग्रन्थं परिमाणतः परिच्छिनत्ति॥

षडध्यायनिबद्धस्य छन्दसोऽस्य परिस्फुटम्।
प्रमाणमिह विज्ञेयं षट्त्रिंशदधिकं शतम्॥ ५॥ इति।

परि समन्तात् साकल्येन स्फुटं प्रकटं यथा स्यात्तथा षड्भिरध्यायैर्निबद्धस्य घटितस्यास्य छन्दसः छन्दोग्रन्थस्य वृत्तरत्नाकराख्यस्य षट्त्रिंशदधिकं षट्त्रिंशत्संख्याधिकं द्वात्रिंशदक्षराणामनुष्टुप्छन्दसां श्लोकानां १३६ परिमाणं ज्ञेयम्। अनुष्टुप्श्लोकपरिमाणमेवात्र गृह्यते, ग्रन्थगणनायां लोके तस्यैव प्रसिद्धत्वात्। एतेनान्यतरग्रन्थपाठे प्रयासाभावाद्विस्तीर्णभाष्यखण्डत्यादिग्रन्थप्रयासनैरपेक्ष्येणैव प्रसिद्धसकलच्छन्दोज्ञाननिरतैर्बुभुत्सुभिरयमेव ग्रन्थोऽभ्यसनीय इत्युक्तं भवति। इदानीं सकलवाग्व्यापित्वेन मादीन् गणान् स्तुवन् लक्षणकथनार्थमुद्दिशति॥

म्यरस्तजभ्नगैर्लान्तैरेभिर्दशभिरक्षरैः।
समस्तं वाङ्मयं व्याप्तं त्रैलोक्यमिव विष्णुना॥ ६॥ इति।

मगण यगण रगण सगण तगण जगण भगण नगण गुरुभिर्लान्तैर्लघुयुक्तैरेभिर्दशभिर्गणाष्टकगुरुलघुरूपैरक्षरैः समस्तं वाङ्मयं वाग्जालं व्याप्तमस्तीति शेषः। अत्रोपमा विष्णुना त्रैलोक्यं यथा व्याप्तं तद्वत्। अत्र स्वरोच्चारणं सौकर्यार्थम्, एवमुत्तरत्रापि। वक्ष्यमाणाक्षरप्रस्तारक्रमोपक्रमनिर्देश-

कमवृत्तानुरोधेनायं क्रम उक्तः। "धी श्री स्त्री म्" "वरा सा य्" "का गुहा र्" "वसुधा स्" "सा ते क्व त्" "कदा स ज्" "किं वद भ्" "न हसन्" "गृ ल्" इति क्रमेण गणान् लक्षयति॥

सर्व्वगुर्मो मुखान्तर्लो यरावन्तगलौ सतौ।
ग्मध्याद्यौ ज्भौ त्रिलोनोऽष्टौ भवन्त्यत्र गणास्त्रिकाः॥ ७॥ इति।

अत्र छन्दःशास्त्रे अष्टौ त्रिकास्त्र्यक्षरा गणा भवन्ति चतुरक्षरा गणा मा भूदिति त्रिका इत्युक्तम्। परिमाणेन तानाह सर्व्वेति, सर्व्वे गवो गुरवो यस्मिन्नसौ सर्व्वगुः, नामैकदेशे नामग्रहणमिति न्यायेन गुशब्दो गुरुवाची एवं लशब्दो लघुवाची एवं सर्व्वल, मः मगणः। मुखे आदौ अन्तर्मध्ये लो लघुर्ययो-स्तौ यरौ यगणरगणौ। अन्ते गलौ गुरुलघू ययो स्तौ क्रमेण सतौ सगणतगणौ। ग् गुरुर्मध्य आद्यश्च ययोस्तौ ज्भौ जगणभगणौ। त्रिलस्त्रिलघुर्नः नगणः। एतेषां प्रस्तारो यथा, मः SSS, यः ISS, रः SIS, सः IIS, तः SSI, जः ISI, भः S II, नः III एतेषां क्रमनियमश्च प्रस्तारे प्रकटीभविष्यति॥ अन्य-त्रापि मादीनां स्वरूपमुक्तम्॥ "मस्त्रिगुरु स्त्रिलघुश्च नकारो भादिगुरुः पुन-रादिलघु र्यः। जो गुरुमध्यगतो रलमध्यः सोऽन्तगुरुः कथितोऽन्तलघुस्तः॥" इति। अन्यैस्तु देवताफलस्वरूपाण्येषामुक्तानि "मो भूमिस्त्रिगुरुः श्रियं दिशति, यो वृद्धिं जलश्चादिलो, रोऽग्निर्मध्यलघु विनाशमनिलो देशाटनं सोऽन्त्यगः। तो व्योमान्तलघु र्धनापहरणं, जोऽर्को रुजं मध्यगो, भश्चन्द्रो यश उज्ज्वलं मुखगुरु र्नो नाक आयुस्त्रिलः" इति॥ इदञ्च फलं काव्यनाटकस्य तत् कर्त्तुः पठितु र्वा यथायोगंत्र व्यस्तंसमुच्चितं वा ज्ञेयम्। यत्र नायकादिभिः प्राचीनो देवतादिः स्वकल्पितो वात्र कर्त्तुः श्रोतॄणाञ्चेत्यादि। क्वचित्तु देवता-मात्रमुक्तवादि "पृथ्वी जलशिखिवायुगगनं सूर्यश्चन्द्रमा नाकः। प्रस्तारक्रमवशतो देवा ज्ञेया यथासङ्ख्यम्" इति। अथ यदि दैवाद् दुष्टफलो गणः काव्यादौ स्यात् तद्रक्षणार्थं द्वितीयो गणः शोध्यः तत्र मगणनगणौ मित्रसंज्ञौ भगणयगणौ भृत्यौ जतावुदासीनौ रसावरी नीचौ च। तदुक्तं "मनौ मित्रे भयौ भृत्यावुदा-

सीनौ जतौ स्मृतौ। रसावरौ नीचसंज्ञौ ज्ञेयावेतौ मनीषिभिः" इति। तथा च यदि मित्रगणान् मित्रगणस्तदा समृद्ध्यादि फलम्, मित्रगणाद् भृत्यगणो जयादिशुभम्, मित्रादुदासीने शून्यकम्, मित्राच्छत्रौ बन्धुपीड़ा, भृत्यान्मित्रे तु सर्व्वकार्यप्रसिद्धिः, भृत्याद्भृतेत्र सर्व्वो लाभः, भृत्यादुदासीने धननाशः। भृत्याद्वैरिणि शोकः। उदासीनान्मित्रे किञ्चिदेव कार्यप्रसिद्धिः, उदासीनाद्भृते सर्व्वं वशाः, उदासीनादुदासीने न शुभं न चाशुभम्, उदासीनाच्छत्रौ स्वजनवैरम्, (शत्रो र्मित्रे भ्रमः,) शत्रो र्भृते गृहिणीनाशः, शत्रोरुदासीने स्वकुलक्षयः, शत्रोः शत्रौ काव्यनायकनाशो भवति इति गणयुगफलम्। तदुक्तं "मित्रान्मित्रादयः सुर्यदि धनमुदयं शून्यकं बन्धुपीड़ा भृत्यान्मित्रादयश्चेद् छतिमधिकगुणं हानिशोकौ च कुर्युः। औदासश्चार्थोच्च मित्रादय इह कुसखा धैर्यमीषत् स्ववैरं शत्रो र्मित्रादयश्चेद्भ्रममथ गृहिणी नाशमाधिं विनाशम्॥" इति। तथा "मित्रान्मित्रं विधत्ते प्रचुरधनमथो मित्रतो भृत्यसंज्ञः स्थैर्यं मित्रादुदासो न किमपि च फलं मित्रतः शत्रुसंज्ञः। बन्धोः पीड़ामथो स्याद्यदि खलु नियतं भृत्यतो मित्रसंज्ञः सर्वं कार्यं च भृत्याद्भृतगण इह चेद्रायतिः सर्वलोके॥ भृत्याच्चेत् स्यादुदासो धनविगममथो भृत्यतः शत्रुसंज्ञः शोकं कुर्य्यादुदासाद् यदि भवति तदा मित्रसंज्ञोऽल्पकार्यं। तस्माद्भृत्यः प्रभुत्वं तत इह सततं स्यादुदासोऽपि नाशं तस्माच्छत्रुः स्ववैरं विविधगुणहरं सर्वसत्कार्यनाशम्॥ शत्रो र्मित्रश्च शून्यं यदि भवति ततो भृत्यसंज्ञो गृहिण्या नाशं तस्मादुदासो धनहरमधिकं दुःखदारिद्र्यशोकम्॥ शत्रोः शत्रु र्भवेच्चेद् द्विगुणसहितो नायकस्यैव नाशं देशोद्वासं विधत्ते कथयति च फलं पिङ्गलो नागराजः" इति। अत एव किरातमाघनैषधीयेषु दुष्टफलादपि उदासीनाज्जगणादुदासीनस्य तगणस्य सत्त्वान्न मन्दं न चाशुभमिति दोषाभावः। अथ गणशुद्धिप्रसङ्गाद्वर्णशुद्धिरुच्यते। तच्छुद्धौ हि नायकादीनां सुखं भवति। तदुक्तं "अक्षरे परिशुद्धे तु नायको भूतिमृच्छति।" इति। तत्र ङ झ ञ ट ठ ढ ण प फ ब भ म र ल व ष ह लान् संयुक्ताक्षराणि च विहाय शेषाक्षराणि शुभफलानीति संक्षेपः। तदुक्तं भामहेन "अवर्णात् संप-

त्ति र्भवति मुदिवर्णाद् धनशतान्यवर्णादख्याति: सरभसमृवर्णाद् विरहितात् । तथा ङैरच: सौख्यं ङ ञ णरहितादक्षरगणात् । पदादाविन्यासात् भ र ब ह ल पूर्वैं विरहितात् ॥ क: खो गो घ श्च लक्ष्मीं वितरति न यशो ङ स्तथा च: सुखं छ: प्रीतिं जो मित्रलाभं भयमरणकरौ झञौ टठौ खेददु:खे । ड: शोभां ढो विशोभां भ्रमणमथ च ण स्त: सुखं थश्च युद्धं दो ध: सौख्यं मुदं न: सुखभयमरणक्लेशदु:खं पवर्ग: ॥ यो लक्ष्मीं रश्च दाहं व्यसनमथ लवौ श: सुखं षश्च खेदं स: सौख्यं हश्च खेदं विलयमपि च ल: क्ष समृद्धिं करोति । संयुक्तं चेह न स्यात् सुखमरणपटु वर्णविन्यासयोग: पद्यादौ गद्यवक्त्रे वचसि च सकले प्राकृतादौ समोऽयम् ॥" इति । तथा दु:खदारिद्र्यवाचका: शब्दाश्चादौ न प्रयोज्या: । अयञ्च प्रयोगनिषेध: काव्यादौ उक्त: श्लोके चादौ ज्ञेय: । देवतादिवाचकशब्दे तु गणविचारेऽक्षरविचारे दोषाभाव: । तदुक्तं भामहेनैव "देवतावाचका: शब्दा ये च भद्रादिवाचका: । ते सर्वे नैव निन्द्या: स्यु र्लिपितो गणतोऽपि च" इति । तथाच माघकिरातयो र्जगणसंयोगयो: प्रयोगेऽपि श्रीशब्दप्रयोगाद्दोषाभाव इत्यलं भूयसा प्रसक्तेन, प्रकृतमनुसराम: । इदानीं मात्राच्छन्द:सूपयोगिनो गणानाह ॥

ज्ञेया: सर्वान्तमध्यादिगुरवोऽत्र चतुष्कला: ।
गणाश्चतुर्लघूपेता: पञ्चार्य्यादिषु संस्थिता: ॥ ८ ॥ इति ।

अत्रार्य्यादिषु छन्द:सु स्थिता श्चतुष्कला श्चतुर्मात्रा: पञ्चगणा ज्ञेया: । प्राकृत्याय स्वरूपतस्तानाह सर्वेति । सर्वत्रान्ते मध्ये आदौ च गुरु र्येषां ते तथा कथंभूता: चतुर्लघुना गणेनोपेता: युक्ता: । तत्र चतुर्मात्रिकत्वात् सर्वगुरुर्द्विगुरु र्लभ्यते यथा सर्वगुरु: ऽऽ, अन्त्यगुरु: ।।ऽ, मध्यगुरु: ।ऽ।, आदिगुरु: ऽ।।, चतुर्लघु: ।।।।, अयं गणक्रम: आर्य्यानष्टोद्दिष्टयोरुपयोगीति तत्रैव वक्ष्यति । पञ्चकलादयस्तु प्राकृतप्रक्रमे वक्ष्यन्ते, संस्कृतेऽनुपयोगात् । गणान् संलक्षयित्वा गुरुं लक्षयति ॥

सानुस्वारो विसर्गान्तो दीर्घो युक्तपरश्च यः।
वा पदान्ते त्वसौ ग्वक्रो ज्ञेयोऽन्यमात्रिको लृजुः॥ ६॥ इति।

असौ वर्णो ग् गुरु र्ज्ञेयः॥ कोऽसावित्यपेक्षायामाह सानुस्वार इति अनुस्वा
ेण युक्त अं कमित्यादिः विसर्गान्तः अः कः इत्यादिः दीर्घः आकारइत्यादिः।
दं च तस्योपलक्षणं। युक्तपरः युक्तः संयुक्तः परो यस्य स संयोगे परभूते
ः पूर्वः सोऽपि गुरुरित्यर्थः, यथा विष्णुरित्यादौ विशब्दादिः। पादान्ते
ोकचरणान्तेऽनुवर्त्तमानो लघु गुरु र्वा भवति लघ्वपेक्षिते लघु कार्यं गुरावपे-
क्षिते गुरु कार्यं करोतीत्यर्थः। अयञ्च व्यवस्थितविकल्पः तेन "अथ वासवस्य
वचनेन" इत्यादौ उद्गतादिपदान्तस्य लघुतैव। "तस्याः खुरन्यासपवित्र-
पांसुम्" इत्यादौ च गुरुतैव। युक्तपरश्च इति व्यञ्जनोपाध्मानीयजिह्वामू-
लीयपराणामुपलक्षणं। तथा च "तनुवाग्विभवोऽपि सन्। मन्दः कवियशः-
प्रार्थी" इत्यत्र वमादिषु सकारस्य जिह्वामूलीयोपध्मानीयपक्षे च दकारशका-
रयोर्गुरुत्वं सिद्धं भवति। इतरथा नकारस्य पादान्तत्वात् सकारस्य न प्रा-
प्नोति जिह्वामूलीयोपध्मानीययोश्च संयोगत्वाभावाद् दकारशकारयो र्न प्रा-
प्नोति। तदुक्तं "दीर्घं संयोगपरं तथा प्लुतव्यञ्जनान्तामध्यान्तम्। सानुस्वारञ्च
गुरु क्वचिदवसानेऽपि लघ्वन्त्यम्॥" इति। व्यञ्जनपरस्य गुरुत्वाल्लघ्वन्तपादेषु
समान्यादिषु व्यञ्जनान्तः पादो न कार्यः। ननु संयोगे गुरु दीर्घञ्चेति वदता
पाणिन्याचार्येण पादान्तस्थादीनां गुरुसंज्ञायामनुक्तत्वात्तद्विरोधः इति चेत् मैवं
कुण्डा ऊण्डा इत्यादिषु "गुरोश्च हलः" इत्यकारप्रत्ययस्य ईहाञ्चक्रे ऊहाञ्चक्रे
इत्यादिषु च "इजादेश्च गुरुमतोऽनृच्छः" इति आम्प्रत्ययस्य सिद्ध्यर्थं स्वशास्त्रे
संयोगदीर्घयो गुरुत्वं पाणिनिः प्रत्यज्ञासीत्। अन्येस्तु स्वशास्त्रे प्रयोजना-
भावान्नोक्ते इति न किञ्चिदेतत्। वृत्तिकारस्तु "गन्ते" इति सूत्रे
वाशब्दाश्रवणात् सर्वत्र पादान्तस्थस्य लो गु र्भवतीति व्याचख्यौ तदयुक्तं।
गुरुलघुभ्यां लघुभिरेव च समाप्तयोः समानीगीत्यार्ययो र्व्यभिचारात्।
अथ तत्र लघुसमाप्तिविधायकशास्त्रेण विशेषात्मकेन सामान्यस्यास्य बाध

इति मतं तदपिन सिद्ध्यै। न हि लघुना समाप्ति र्विधीयते न तु समाप्तिस्थस्य लघुत्वं येन बाधः स्यात् गन्ते इति सूत्रन्तु अन्ते पदान्ते स्थितो लघुः क्वचिद्गुरुरिति क्वाचित्कत्वाभिप्रायं व्याखेत्रयं। तेन न तद्विरोध इत्यलं प्रपञ्चेन। स च प्रस्तारे वक्रः नागराक्षरेऽकारप्रश्लेषचिह्नवत् (ऽ) न्यो लेख्यः,अन्यः पूर्वोक्तेभ्यः सानुस्वारादिभ्योऽन्यः ल् लघुः। कोऽसावन्यमात्रिकः मात्रारूपः एतेन गुरोर्द्विमात्रत्वमुक्तम् भवति। स प्रस्तारे कर्त्तवेत्र ऋजुः रेखाकारः कार्यः (।)। संयोगपरस्त्र क्वचिदपवादमाह॥

पादादाविह वर्णस्य संयोगः क्रमसंज्ञकः।
पुरा स्थितेन तेन स्याल्लघुतापि क्वचिद्गुरोः॥१०॥ इति॥

इह छन्दःशास्त्रे पादादौ चरणादौ वर्णान्तरेण संयोग क्रमसंज्ञकः पूर्वाचार्यैरुक्त इति शेषः। तेन पादादिसंयोगेन पुरःस्थितेन क्वचिदपेक्षितविषये संयोगपरत्वाद् गुरोरपि लघुता स्यात् "वा पादान्ते" इत्यत्र पादान्ते लघो र्गुरुत्वं इह तु गुरोर्लघुत्वमिति न पौनरुक्त्यमिति भावो वच्यते। गुरो र्लघुतायामुदाहरणं साम्प्रतमाह॥

तरुणं सर्षपशाकं नवोदनं पिच्छिलानि च दधीनि।
अल्पव्ययेन सुन्दरि ग्राम्यजनो मिष्टमश्नाति॥ ११॥ इति।

अस्य पूर्वश्लोकार्धस्य अत्र ग्राम्यनागरिकवरागमे ग्राम्य वरेसाभिलाषां चतुरवधूं निन्दागर्भस्तुत्या निवारयन्ती सखी आह। हे सुन्दरि ग्राम्यजनो ग्रामीणो जनो अल्पव्ययेन मिष्टं रसवदशनमश्नाति भुङ्क्ते किं तत् तरुणं कोमलं सर्षपानां शाकं नवानां तण्डुलानामोदनं च अपर्युषितौदनं पिच्छिलानि बहुलानि दधीनि अल्पद्रवत्वो मिष्टाभासभोजी ग्राम्यजनोऽचतुरोऽयं। हे सुन्दरि अतोऽमुं परित्यज्य नागरिके साभिलाषा भवेत्यत्र ध्वन्यं। अत्र सुन्दरीत्यत्र संयोगपरत्वाद्गुरुत्वे सति तृतीये पादे त्रयोदश मात्रा माभूदिति लघुत्वं प्रतिज्ञायते तथा च द्वादशमात्रत्वैवेति भावः। क्वचिदिति व्यवस्थितविकल्पार्थं तेन सुन्दरीत्यत्र लघुत्वैव। गुणिनामपि निजरूपप्रतिपत्तिपरत एवं संभ-

वन्ति । "स्वमहिमदर्शनं चते मुकुरतले जायते यस्मात् । दानं भोगो नाशस्ति-स्रो गतयो भवन्ति वित्तस्य ॥" इत्यादौ गुरुतैव । आर्य्याया सुदाहरता आर्य्यासु पादव्यवस्थाभावं वदन्तो वृत्तिकृतः पराकृताः । अत एव त्रिभिस्त्रिगणैः पादौ आर्य्यादे विषमौ स्मृताविति, यस्याः पादे प्रथम इत्यादि चाभियुक्तोक्तौ पथ्याभिप्रायं वा तत्र पादव्यवस्थाया वक्ष्यमाणत्वात् । ननु वा पदान्त इत्यत्र वर्णमात्रस्य वा पादान्तस्थस्य गुरुता विकल्प्यते, गुरोरेव वा नित्यप्राप्ता सा विकल्प्यते, लघोरेव वा । नाद्यः पादान्तवर्णमात्रस्य तेनैव गुरुताविकल्प-पक्षे लघुत्वस्यापि सिद्धत्वात् पादादावित्यस्य वैयर्थ्यप्रसङ्गात्, लघ्वंशे अप्राप्तविकल्पः गुर्वंशे प्राप्तविकल्प इति विरुद्धार्थद्वयकृतवाक्यभेदप्रस-ङ्गाच्च । न द्वितीयः तेनैव पाक्षिकलघुतायाः सिद्धौ पुनर्विधानवैयर्थ्यात्, तरुणमित्युदाहरण एव द्वितीयचतुर्थपादान्तयो र्लघ्वो र्गुरुत्वाभावे च्छन्दो-भङ्गप्रसङ्गाच्च । न तृतीयः लघोस्तत्राप्रस्तुतत्वात्, असंयोगपरस्यापादान्त-गुरोरक्रमपरत्वात्पाक्षिकलघुत्वाभावप्रसङ्गाच्चेति चेत्, अत्र पादान्तवर्ण-मात्रमुद्दिश्य विकल्पितं गुरुत्वं तेन विधीयते इति विधेयोद्देश्ययोरैकावच्छेदार्थद्वयस्यार्थसिद्धत्वाद्, वाक्यभेदाभावः पौरुषेयत्वाद्वा स न दोषः । पादादाविति च तस्यैव विषयं प्रदर्शयद्विवरणं तरुणमित्यादिषु गुरोर्लघुतायां तृतीयपादे उदाहरणं लघो र्गुरुतायाञ्च द्वितीयचतुर्थपादयोरुदाहरणमित्या-पातत उत्तरं भवति । वस्तुतस्तु अप्रस्तुतस्याप्यर्थतो बुद्धिस्थस्य लघोरेव गुरुता तेन विकल्प्यते । पादान्तगुरोस्तु लघुता संयोगपरस्येत्यनेनैवो-च्यते । अक्रमपरस्य तु पादान्तगुरो र्लघुता नेष्टैव अतएव "गन्ते" इति सूत्रे "ग्ल्" इति पूर्वसूत्राद्ग्रहणमनुवर्त्य ग्शब्दोपलक्षितस्य ह्रस्वाक्षरस्य पादान्ते वर्त्तमानस्य गुरुसंज्ञा निर्दिश्यते इति वृत्तिकारे-णोक्तम् । इदं च गुरो र्लघुत्वं संयोगनिमित्तकगुरोरेव न दीर्घादेः । अत्र सोदाहरणो मामकः संग्रहश्लोकः 'युक्तपरस्वनिमित्तकप्रान्तगुरोरेव वेष्यते लघुता । पादान्तस्थस्य लघोरिह गुरुता वेष्टस्य जानीहि' इत्यलं प्रपञ्चेन । इदं चोपलक्षणं प्रशब्दे ह्रशब्दे च परतोऽपादान्तस्थस्यापि लघुतायाः

कविप्रयोगे दर्शनात् । तथाच कुमारसंभवे 'गृहीतप्रत्युद्गमनीयवस्त्रा' इति प्रशब्दे परतस्तत्र लघुता दृष्टा । 'प्राप्तनाभिह्रदमज्जनमाशु' इति । अन्यत्रापि, 'तवह्रियापह्रियो मम ह्रीरभूत्' इति ह्रशब्दे परतो लघुता दृष्टा । अनेन तु संयोगमात्रे परभूते लघुत्वमतीवप्रयत्नतयेतराहुः । अतएव सरस्वतीकण्ठाभरणे उक्तं "यदातीव्रप्रयत्नेन संयोगादेरगौरवं । न च्छन्दोभङ्गमित्याहुस्तदा दोषाय सूरयः ॥" इति । तथाच कविप्रयोगाः । रामायणे 'कृतार्थाश्च कृतार्थानां मित्राणां न भवन्ति ये । तान्मृतानपि क्रव्यादाः कृतघ्नान्नोपभुञ्जते' इति । 'एवं तदार्या नृपवीरसिंह सीता वचः प्राह विषादयुक्तम् । एतच्च श्रुत्वा गदितो मया त्वं सीतोपलम्भे प्रकुरुष्व यत्नम्' इतिच । 'तव ह्रियापह्रियो मम ह्रीरभूच्छ्रिगृहे विस्तृता न धृता ततः । बकुलभ्रामरमेचकतामसं मम प्रिये क्व समेष्यति नो पुनः' इति च । अन्यत्र 'धनप्रदानेन श्रुतेन कर्णः' इत्यादि । प्राकृतेऽपि "जह ण्हाउं ओइस्रो अब्भत्तमुल्हसिअंसुअङ्कन्तं । तह अण्णण्हा ओसि तुमं सच्छे गोलाणईतूहे" इति । अत्र द्वितीयैकादशयोर्विंशतिवर्णानां संयोगपरत्वाद्गुरुत्वेऽपि ण्हल्हादिसंयोगस्यातीवतीव्रप्रयोगोच्चारणेन पूर्व्वस्य लघुतायां न छन्दोभङ्गो भवति । इदञ्च महाकविप्रयोगदर्शने भवति न तु स्वेच्छया । अत एवाहुः, 'क्वचिदपि संयुक्तपरो वर्णो लघुरत्र दर्शनेन यथा । परं ह्रसति चित्तधैर्य्यं दारकटाक्षेषु निर्वृतमिति' । तीव्रप्रयत्ने तु गुरुतैव 'अथ प्रजानामधिपः प्रभाते' इत्यादौ । तथा इहिंउंह्ङ्काराणां एकारौकारयोश्च केवलयोः सव्यञ्जनयोर्वा प्राकृतादिभाषासु विभाषागुरुता भवति । तदुक्तं "इहिकारौ विन्दुयुतौ एओ शुद्धौ च वर्णमिलितौ च । रहयोर्व्यञ्जनयोगे सविभाषं सर्व्वमेव लघु ॥" इति । अत्र इहिकाराविल्युपलक्षणं । इं हि ए ओ एतेषूदाहरणं 'माणिणि माणेहि काइं फलं एओ जे चरणमिल कन्त । सहजे भुजङ्गमु जइ णमइ, तह किं करिअ मणिमन्त ॥' अत्र इं हि ए ओ इत्येतेषां गुरुतायां दोहाच्छन्दसोऽधिकमात्रताव्यपदेशत इह व्यञ्जनसंयोगे तदाहृतं तथा प्राकृतादिषु

दीर्घस्यापि त्वरितपाठे लघुता। तथा द्वयोस्त्रयाणां वा वर्णानां त्वरितपाठे एकवर्णता भवति। तदुक्तं "दीर्घाक्षरमदीर्घाक्षरमपि जिह्वा क्लृप्तं चेत्पठति तदपि भवति लघु। द्वौ वा त्रीनथ वर्णानेकं जानीहि शीघ्रपठनाच्च" इति। अत्रोदाहरणमूह्यम्। अयं प्राकृतविचारः पञ्चमाध्यायान्तवक्ष्यमाणप्राकृतच्छन्दःसूपयोगाय कृत इत्यलं बहुना॥ परिभाषान्तरमाह।

> अब्धिभूतरसादीनां ज्ञेयाः संज्ञास्तु लोकतः।
> ज्ञेयः पादश्चतुर्थांशो यति र्विच्छेदसंज्ञितः॥ १२॥ इति।

लोकतो लोकव्यवहारादब्ध्यादीनां संज्ञा संज्ञीभूताः चतुरादिसंख्या इति यावत् ज्ञेया यतिनियमेषु। तद्यथा अब्धयश्चत्वारः ४ भूतानि पञ्च ५ रसाः षट् ६॥ आदिपदादश्वा मुनयश्च सप्त ७, वसवो नागाश्चाष्टौ ८, ग्रहा नव ९, दिशो दश १०, रुद्रा एकादश ११, आदित्या द्वादश १२ इत्येवमादि ज्ञेयम्। अब्ध्यादिशब्दाः स्वपर्यायाणां स्वार्थसङ्ख्यासमानसङ्ख्यार्थानाञ्चाप्युपलक्षकाः। तेन समुद्रवेदादयोऽपि लोकतो ज्ञेयाः। तथा छन्दःशास्त्रत्वाच्छन्दश्चतुर्थांशश्चतुर्थो भागः पादो ज्ञेयः। पादादिव्यवहारेषु अंशः समचतुर्थोऽत्र न ग्राह्यः किन्तु यावान् यत्रोक्तः। तथाच समानां विषमाणां चोद्गतादीनां पादाः संगृहीता भवन्ति। पादशब्दः स्वपर्यायाणामङ्घ्रिचरणादीनामुपलक्षकः। तथा यतिः यतिशब्दो विच्छेदे विरामे संज्ञितः परिभाषितः संज्ञाकृतो ज्ञेयः। संज्ञितेति पाठे यतिशब्दसामानाधिकरण्यात् स्त्रीलिङ्गता ज्ञेयेति विपरिणततानुषङ्गः। इयञ्च यतिः श्रुतिसौकर्यार्थं नियतस्थानेषु कार्या। यतिनियमस्थानानि च वृत्तकारैः संगीतानि "यतिः सर्वत्र पादान्ते श्लोकार्धे तु विशेषतः। समुद्रादिपदान्ते च व्यक्ताव्यक्तविभक्तिके॥ १॥ क्वचित्तु पदमध्येऽपि समुद्रादौ यतिर्भवेत्। यदि पूर्वापरौ भागौ न स्यातामेकवर्णकौ॥ २॥ पूर्वान्तवत् स्वरसन्धौ क्वचिदेव परादिवत्। एष्ट्यो यतिचिन्तायां यणादेशः परादिवत्॥ ३॥ नित्यं प्राक्पादसम्बद्धा-

स्वादयः प्राक् पदान्तवत्। परेण नित्यसंबद्धाः प्रादयश्च परादिवत्॥ ४॥" इति। तेषामर्थ उदाहरणेन स्पष्टीक्रियते। यतिः सर्वत्र पादान्ते इत्यस्योदाहरणं 'अत्र मे सखि शिखण्डमण्डने पुण्डरीककमनीयलोचने। श्यामतामरसदामकोमले रामनामनि मनो मनोरमे" इत्यादि। प्रत्युदाहरणं तु "नमस्तस्मै महादेवाय शशाङ्कार्धधारिणे" इत्यादि। श्लोकार्धे तु विशेषत इत्यस्योदाहरणम् पूर्वोदाहरणे दर्शीनि अल्पव्यपेनेत्यत्र। सन्धिर्न भवति स्पष्टविभक्तिकता च भवतीति विशेषः। सन्धौ प्रत्युदाहरणं 'श्यामा कामाकुला रामा वामा भोगाय चाप्यते। नैकजन्मसुपुण्यानां निचयो न चितो यदि।' अत्र पूर्वरूपकरणम्। स्पष्टविभक्तिकतायां प्रत्युदाहरणम् 'सुरासुरशिरोरत्नस्फुरत्किरणमञ्जरी पिञ्जरीकृतपदाब्जद्वन्द्वं वन्दे महेश्वरम्॥' अत्र समासकरणम्। समुद्रादीत्युदाहरणम् 'तस्मिन्नद्रौ कतिचिदबलाविप्रयुक्तः स कामी' इति। अत्र मन्दाक्रान्तायां चतुर्षु स्पष्टविभक्तिकता ततः षड्स्वव्यक्तविभक्तिकता। पादान्त इत्यस्यापि विशेषणम्। व्यक्ताव्यक्तविभक्तिक इति तत्रोभयोदाहरणम् "स्यन्दने गरुडकेतुलाञ्छने कुण्डिनेशतनयाधिरोपिता। केनचिन्नवतमालकोमलश्यामलेन पुरुषेण नीयते॥' क्वचिदिति समुद्रादौ या यतिः सा पदमध्ये क्वचिद्भवति यदि पदस्य यत्यपेक्षया पूर्वपरभागौ एकवर्णौ न भवत इत्यर्थः। अत्रोदाहरणं 'पर्यन्ताश्रितं तप्तचामीकरकटकतटे श्लिष्टशीतेतरांशौ' इति। समुद्रादावित्यत्र। पादान्तयतिः पदमध्ये न भवति। प्रत्युदाहरणम् 'प्रणमत भवबन्धक्लेशनाशायनारायणचरणसरोजद्वन्द्वमानन्दहेतुम्।' पूर्वोत्तरभागयोरेकाक्षरत्वे तु यति दोषाय सा च धातुनामप्रत्ययाव्ययभागभेदेन चतुर्धा। तत्र क्रमेणोदाहरणानि। 'एतासांराजति सुमनसां दाम कण्ठावलम्बि' 'स्वीकुर्वन्ति हि सुधियः प्रकुर्वते च' 'दुःसोढो दाशरथिमहिमा राक्षसानां बभूव' 'सुराहुरशिरोनिष्टचरणारविन्दः शिवः' 'सबलयति सुरवधूकल्पासु रामासु को न' 'भुवि हरगुरुदेशीयाः कियन्तो न सन्ति' 'कलिवशविवशः संप्रत्ययं जीवलोकः' 'रामेशं वा प्रतिदिनमुदितान्दो रमे शम्भुनामा।' एवमन्यान्यपि सङ्कीर्णान्युदाहरणानि ज्ञेयानि।

पूर्वान्तवत्स्वरसन्धावित्यस्यार्थः योऽयं पूर्वपरयोरेकादेशः स्वरः सवर्णदीर्घादिः स प्रायः पूर्वान्तवत् क्वचिदेव परादिवच्च द्रष्टव्य इति। अतएवान्तादिवच्चेति पाणिनिः सस्मार। पूर्वान्तवद्भावे यथा, 'कस्ते दारिद्र्यदावानल वदतु यशो वावदूकोऽपि दाने' 'स्नादस्थानोपगतयमुनासङ्गमे वाभिरामा।' 'परादिवद्भावे यथा, 'अन्तेवासिदयालुरुज्झिततनयेनासादितो जिष्णुना॥' अत्र स्वरस्य परादिवद्भावे व्यञ्जनमपि परादिवद्भवति। तदङ्गत्वात् यदि पूर्वापरभागौ न स्यातामेकवर्णकाविति पूर्वान्तवत्स्वरसन्धावित्यादेरपि शेषत्वेन 'अस्या वक्त्रं समरजयि पूर्णेन्दुशोभं विभाति' इत्यादौ यतिर्दूष्या। असौ तत्रापि पूर्वभागस्यैवैकवर्णतायां दोषः तदुक्तस्य तदर्थमेव स्वरसन्धावनेनापवादकरणात् यणादेशः। परादिवदित्यत्रोदाहरणम् "सप्ताकूपारप्रथितपृथुयशस्यर्थिसार्थे कृतार्थे"। व्यञ्जनस्यापि परादिवद्भावो दृश्यते यथा, 'इत्यैत्मुक्यादपरिगणयन् गुह्यकस्तं ययाचे" इति। तेभ्यः पूर्वा यति र्न कार्येत्यर्थः। यथा, "बाले भूपतिमौलिलालितपदद्वन्द्वस्य दृष्टोऽपि च"। आदिपदात् 'रक्षोभिः सुरमनुजै र्दितेः सुतै र्वा' प्रत्युदाहरणन्तु "नमः शिवाय कृष्णाय च दानवविनाशिने"। नित्यं प्राक्पदसम्बद्धा इति किं "तथाद्रियन्ते न बधाः सुधामपि।" चादय इति किं 'सम्पत्तिः सैव रमणीसखैर्या भुज्यते भुवि।' अत्र समासान्तटच्प्रत्ययान्तसखिशब्दस्य नित्यं प्राक्पदसम्बन्धत्वेऽपि यतिर्न दुष्यति। परेण नित्यसम्बद्धा इति पदादिति तेभ्यः परा यतिर्न भवतीत्यर्थः 'प्रस्मृतः किमथवा पठितो नु'। आदिपदात् 'निजगृहे जयिनं तिसृणां पुराम्'। परेण नित्यसम्बद्धा इति किं कर्मप्रवचनीयेभ्यः परा यतिर्भवत्विति। यथा, 'श्रेयांसि बहुविघ्नानि भवन्ति महतामपि।' प्रादय इतिकिं 'राक्षसाधिपबलं प्रणाशयाञ्चकार रघुवरो वशी रणे॥' अयन्तु अनेकाक्षराणां चादीनां प्रादीनाञ्चादिवद्भावः पादान्तयताविष्यते। एकाक्षराणां तु पादान्तयतौ पादमध्ये समुद्रादियतौ च। तदुक्तं कविकल्पलतायाम् 'एकस्वरोपसर्गेण विच्छेदश्रुतिसौख्यकृत्' इति। पादान्ते यतौ प्रत्युदाहरणं तत्रैवोक्तं यथा, 'पिणाकपाणिं प्रणमामि स्मरशासनम्'

इति। पादमध्ये यतौ प्रत्युदाहरणं 'विष्णुं यद्रस्य खलु भजतां नैव संसारबन्धः'। अनेकाक्षराणां तु पादमध्ये चामीकरादिष्विव पूर्वापरभागयोरेकवर्णत्वाभावाद्यतिरिष्टैव। तत्र चादीनां यथा, 'प्रतत्रादेशादपि च मधुनो विस्मृतभ्रूविलासम्' इत्यादि। प्रादीनां यथा, 'दूराकृष्टप्रमोदं हसितमिव परिस्पृष्टमाशासखीभिः।' अत्र नित्यं प्राक्पदसंबद्धा इत्यत्र 'स्वादु स्वच्छं सलिलमपि च प्रीतये कस्य न स्यात्।' नित्यं प्राक्पदसम्बद्धा इति किं 'मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्या' इति। परेण नित्यसम्बद्धा इत्यत्र च 'दुःखं मे प्रक्षिपति हृदये दुःसहस्त्वद्वियोगः' इत्यादि वृत्तिकारैः समुद्रादियतिरुदाहृता। अन्ते चायं तु पदान्तयतावन्तादिवद्भाव इष्यते न तु पादमध्ययतावित्यादि स्वयमेवोक्तं तद्विचारणीयम्। यथा, 'अनुक्तयतिकेऽप्यत्र वं कार्या श्रुतिसुखा यतिः।' तदुक्तं कविकल्पलतायाम् 'एवं यथायथोद्वेगः सुधियां नोपजायते। तथा तथा मधुरतानिमित्तं यतिरिष्यते'॥ इति। शुक्लाम्बरादयस्तु पदान्त एव यतिमाहुः। भरतादयस्तु यतिमेव नेच्छन्ति। अतएव कविप्रयोगाः। तत्र भर्तृहरेः 'लभेत सिकतासु तैलमपि यत्नतः पीडयन् पिबेच्च मृगतृष्णिकासु सलिलं पिपासार्दितः। कदाचिदपि पर्यटन् शशविषाणमासादयेन्नतु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत्'॥ इति। जयदेवस्यापि 'भावं शृङ्गारसारस्वतमयजयदेवस्य विष्वग्वचांसि' इति। तदुभयं बहुविरोधाच्चिन्त्यम्। इयञ्च यति वृत्तस्वरूपाङ्गिन्यापि गुणालङ्काराद्यपेक्षया अन्तरङ्गाङ्गत्वात् सूत्रकारादिभिर्लक्षणमध्ये निबद्धा, नतु वृत्तस्वरूपतया। मात्रागुरुलघुनियमनं हि वृत्तलक्षणं विरामात्मकत्वं च यतेः, अतएव वामनेन काव्यालङ्कारसूत्रेषु 'न वृत्तदोषात् पृथग्यतिदोषो वृत्तस्य यत्यात्मकत्वात्' इत्याशङ्क्य न लक्षणस्य पृथक्त्वादिति परिहृतमित्यलं। परिभाषान्तरमाह।

युक् समं विषमं चायुक् स्थानं सद्भि र्निगद्यते॥

समं द्वितीयचतुर्थादि स्थानं युगिति सद्भि र्निगद्यते विषमञ्चैकतृती-

यादि स्थानं सद्भिरयुक् निगद्यते। चकारात्समस्य युग्मानोजसंज्ञे विषमस्यायुग्मौजसंज्ञे इत्यादि ज्ञेयं। पदैः पादाख्यैः घटितं पद्यं। तद्द्विविधं जातिर्वृत्तञ्चेति। जातिर्नियतमात्रिका, वृत्तं नियतगुरुलघुविन्यासं। तत्र जातिरार्य्याद्यादि। वृत्तमुक्तादि समार्धसमात्मकं। तदुक्तं "पद्यं चतुष्पदं तच्च वृत्तं जातिरिति द्विधा। वृत्तमक्षरसङ्ख्यातं जातिर्मात्राकृता भवेत्।" इत्येतत् सर्वं मनसि विधाय वृत्तस्य भेदानाह।

समम्‌र्धसमं वृत्तं विषमञ्च तथापरं॥ १३॥ इति।

समाख्यं अर्धसमाख्यं विषमाख्यं चेति त्रिधा वृत्तमित्यर्थः। त्रिविधस्यापि वृत्तस्यान्वर्थसंज्ञामाश्रित्य क्रमेण स्वरूपमाह श्लोकत्रयेण।

अङ्घ्रयो यस्य चत्वारस्तुल्यलक्षणलक्षिताः।
तच्छन्दःशास्त्रतत्त्वज्ञाः समवृत्तं प्रचक्षते॥ १४॥
प्रथमाङ्घ्रिसमो यस्य तृतीयश्चरणो भवेत्।
द्वितीयस्तुर्यवद्वृत्तं तदर्धसममुच्यते॥ १५॥
यस्य पादचतुष्केऽपि लक्ष्म भिन्नं परस्परम्।
तदाहुर्विषमं वृत्तं छन्दःशास्त्रविशारदाः॥ १६॥

यस्याङ्घ्रयः पादाश्चत्वारोऽपि तुल्येन लक्षणेन लक्षिता युक्ताः तच्छन्दःशास्त्रविशारदाः छन्दःशास्त्रतत्त्वज्ञाः समं वृत्तं वदन्ति। द्वितीयचरणस्तुर्य्यस्य चतुर्थवत् अर्धसमं यस्य तदर्धसमं इत्यन्वर्थता। यस्य पादचतुष्टये परस्परं लक्ष्म लक्षणं भिद्यते तद्विषममाहुः विगतं समं यस्मादिति व्युत्पत्तेः तत्र समं श्र्यादि, अर्द्धसमं द्रुतमध्यादि, विषमं पदचतुरूर्ध्वादि। तत्र समवृत्तभेदानाह।

आरभ्यैकाक्षरात् पादादेकैकाक्षरवर्धितैः।
पृथक्छन्दो भवेत् पादैर्यावत् षड्विंशतिं गतम्॥१७॥ इति।

एकाक्षरात् पादादारभ्येकैकेनाक्षरेण कविना वर्द्धितैः पादैः कृत्वा पृथक् भिन्नं छन्द उक्तादि भवेत्। वृद्धेरवधिमाह यावदिति यावत्षड्विंशतिं षड्विंशतिसङ्ख्याकं पादं प्रति गतं गमनं भवति षड्विंशत्य-

क्षरपादपर्यन्तं वृद्धि र्भवतीत्यर्थः। अधिकाक्षरपादस्य छन्दसः संज्ञामाह।

तदूर्द्ध्वं चण्डवृष्ट्यादिदण्डकाः परिकीर्त्तिताः॥ १८॥ इति।

षड्विंशत्यक्षरात् छन्दस ऊर्ध्वं सप्तविंशत्याद्यक्षरपादं छन्दश्चण्डवृष्ट्यादिदण्डकसंज्ञं भवति सप्तविंशत्यक्षरादेकैकेन रगणादिना वृद्धि र्नत्वेकैकाक्षरेण आदिपदादर्णवादि इह शास्त्रे विशेषलक्षणेनालक्षितस्य छन्दसः कविभिश्च ग्रथ्यमानस्य सामान्यसंज्ञामाह।

शेषं गाथास्त्रिभिः षड्भि श्चरणैश्चोपलक्षिताः॥ १८॥ इति।

शेषं विशेषनिरूपितादन्यत्। तदेवाह त्रिभिरिति क्वचित् त्रिभिः क्वचित्षड्भिः चकाराद्दशादिभि र्विलक्षणगुरुलघुक्रमवद्भि र्न्यूनाधिकाक्षरैश्चरणै र्युक्तास्ता गाथा ज्ञेया इत्यर्थः। पूर्वोक्तानामेकाक्षरपादमारभ्य षड्विंशत्यक्षरपादावधिकानां छन्दसां सामान्यतो जातिसंज्ञा आह।

उक्तात्युक्ता तथा मध्या प्रतिष्ठान्या सुपूर्विका।
गायत्र्युष्णिगनुष्टुप् च वृहती पंक्तिरेव च॥ १९॥
त्रिष्टुप् च जगती चैव तथातिजगती मता।
शक्करी सातिपूर्वा स्यादष्ट्यत्यष्टी ततः स्मृते॥ २०॥
धृतिश्चातिधृतिश्चैव कृतिः प्रकृतिराकृतिः।
विकृतिः सङ्कृतिश्चैव तथातिकृतिरुत्कृतिः॥ २१॥इति।

एकाक्षरपादोक्ता नाम इयं च जातिसंज्ञा अवान्तरसंज्ञास्तु वक्ष्यन्ते। एवमितरत्रापि द्व्यक्षरपादाऽत्युक्ता। एवं शेषा अपि ज्ञेया अन्या सुपूर्विका अनन्तरोक्ता प्रतिष्ठैव सुपूर्वा सती सुप्रतिष्ठा नामान्या जातिरित्यर्थः। सातिपूर्वेति सा शक्कर्य्यतिपूर्वा अतिशक्करीत्यर्थः ननु सूत्रकारेण समच्छन्दसां गायत्र्यादीनामेवोक्तत्वादुक्तादुत्क्ते न तत्सूत्रत्वमिति चेत् न 'द्विकौ ग्लौ'इत्यादि सूत्रोक्तैकाक्षरादिप्रस्तारस्य तत्संज्ञायां ज्ञापकत्वात् कविभिः प्रायेणाप्रयुक्तत्वाच्च तेषां लक्षणावसरेऽनुक्ति रिति भाव्यम्। ता उक्ता १ अत्युक्ता २ मध्या प्रतिष्ठा ४ सुप्रतिष्ठा गायत्री ६ उष्णिक् ८ अनुष्टुप् ८ वृहती ९ पंक्तिः १

त्रिष्टुप् ११ जगती १२ अतिजगती १३ शक्वरी १४ अतिशक्वरी १५ अष्टिः १६ अत्यष्टिः १७ धृतिः १८ अतिधृतिः १९ कृतिः २० प्रकृतिः २१ आकृतिः २२ विकृतिः २३ सङ्कृतिः २४ अतिकृतिः २५ उत्कृतिः २६। अत्र प्रतिपादमेकैकाक्षरवृद्धौ सकले छन्दसि चतुरक्षरा वृद्धिर्भवति। तत्रोक्ता चतुरक्षरा। अत्युक्ताष्टाक्षरा। एवमुत्तरत्रापि। उत्कृतिश्चतुरधिकशताक्षरा। उक्तानुवादपूर्वकं वक्तव्यमाह।

इत्युक्ताः छन्दसां संज्ञाः क्रमतो वच्मि साम्प्रतं।
लक्षणं सर्ववृत्तानां मात्रावृत्तानुपूर्वकम् ॥ २२ ॥ इति।

छन्दसामीत्यमुना प्रकारेण जातिसंज्ञा उक्ताः। साम्प्रतमिदानीं मात्रावृत्तानुपूर्वकं मात्रावृत्तमादितः कृत्वा सर्वेषां वृत्तादीनामुक्तानां क्रमशः क्रमेण लक्षणं वच्मि वदामि इति योजना। प्रथमं मात्रावृत्तमुच्यते ततः उद्देशक्रमेण वर्णवृत्तमुच्यत इत्यर्थः॥

इति श्रीमद्विद्वन्मुकुटमाणिक्यश्रीमद्भट्टरामेश्वरसूनुनारायणभट्टविरचितायां वृत्तरत्नाकरव्याख्यायां परिभाषाध्यायः प्रथमः॥

---

अथ मात्रावृत्तानि विवक्षुः प्रथममार्यां लक्षयति लक्ष्मैतदिति द्वयेन।

लक्ष्मैतत् सप्त गणा गोपेता भवन्ति नेह विषमे जः।
षष्ठोऽयं नलघू वा प्रथमेऽर्धे नियतमार्यायाः॥ १ ॥
षष्ठे द्वितीयलात् परके न्ले मुखलाच्च सयतिपदनियमः।
चरमेऽर्धे पञ्चमके तस्मादिह भवति षष्ठो लः॥ २ ॥ इति।

आर्यायाः प्रथमे एतन्नियतं सार्वत्रिकं लक्ष्म लक्षणं ज्ञेयं। किं तत् सप्तसंख्याका गोपेताः गुरुणा युक्ताः गणाश्चातुर्मात्रिकाः पूर्वोक्ताः गुरूपेतत्वात् सार्धाः यद्यपि 'स्वरा अर्धं चार्यार्धम्' इति सूत्रे अर्धं चेति ग्रहणात् सार्धाः सप्त गणा भवन्तीति सामान्यतः उक्तं, तथाप्यर्धगणस्थाने एको गुरुरेवान्ते कार्यो

न तु लद्वयमिति सूचितम्। इहार्याधे विषमे प्रथमतृतीयादौ स्थाने जः जगणो मध्यगुरु र्गणो न कार्यः। षष्ठस्त्वयं जगणः कार्यः नलघू वा कार्यौ नश्च लघुश्चेति नलघू चतुर्लघु र्वा गणः कार्य इत्यर्थः। अन्ये तु स्वेच्छया ज्ञेयाः। षष्ठ इति द्वितीयलादित्यतः परं पूर्वमिति शेषः। षष्ठे नृ षष्ठस्थाने चतुर्लघौ गणे कृते सति द्वितीयलात् तस्यैव षष्ठस्य चतुर्लघो र्गणस्य द्वितीयलघोः पूर्वं प्रथमलघ्वन्तं सयतिपदनियमः यतिसहितं पदं नियमेन समाप्यत इत्यर्थः। नृले इति प्रथमाद्विवचनं वा ततश्च षष्ठे स्थाने यदि नृ नलघू स्यातां तदा द्वितीयलात् पूर्वं यतिरित्यर्थः परके नृ नले षष्ठापेक्षया परस्मिन् सप्तमके चतुर्लघौ कृते सति, मुखलात् सप्तमस्य प्रथमलघोः पूर्वं षष्ठगणान्ते सयति पदं नियम्यते। चरमे द्वितीये पुनरर्धे पञ्चमके नृ चतुर्लघौ तस्मान्मुखलघोः पूर्वं अर्थाच्चतुर्थान्ते पदं समाप्यत इत्यनुषङ्गेण पूर्वपदाध्याहारेण योज्यं। इहेति इह आर्याचरमार्धे षष्ठो गणो लो लघुरेव भवति न चतुर्मात्रिका इति पूर्वार्धाद्विशेषः। उत्तरार्धे एतावन्मात्रं विशेषं वदतान्यत् पूर्वार्धलक्षणमेव भवतीति द्योतितम्। यतिनियमं छन्दोमाणिक्यकारोऽप्याह 'पूर्वार्धे षष्ठो जः खो वा खे चास्य लघुनि भवति यतिः। षष्ठः खपरोऽत्र यतिस्तुर्योपत्रय भवति चरमदले' ॥ इति। अस्यार्थः ख इति चतुर्लघो र्गणस्य संज्ञा पूर्वार्द्धे षष्ठो गणः जगणः खो वा कार्यः। खे तु षष्ठगणे अस्य लघुनि तृतीयप्रथमलघ्वन्ते यति र्भवति। यदि षष्ठः खपरः खश्चतुर्लघुः परो यस्य स तथा सप्तमश्चतुर्लघुः स्यादित्यर्थः तदात्र षष्ठान्ते वा यतिः चरमदले द्वितीयार्धे यदि तुर्यश्चतुर्थः खपरस्तत्रापि चतुर्थान्ते यतिरिति। यद्वा मूले पञ्चम्यौ ल्यब्लोपे। तेन द्वितीयलमादाय सयतिपदनियमः सयतिकपदप्रारम्भनियम इत्यादिरर्थः। उभयथापि लक्ष्येऽविसंवाद एव। किन्तु एतस्मिन् व्याख्याने 'नृौ चेत् पदं द्वितीयादि' 'सप्तमः प्रथमादि' इति सूत्रानुग्रहो पूर्वपदाध्याहारश्च न कर्तव्यो भवति। अतएव स्वेतराज आह। 'षष्ठे द्वितीयमादाय लमेवारभ्यते पदम्। सप्तमे नृ पुनर्मुख्यं पूर्वार्धे स्यौयतिः स्मृता ॥ परमारभ्यते नित्यं गृहीत्वा प्रथमं लघु। पञ्चमे नृ बुधैरेवं चरमार्धे स्मृता

यतिः' इति। छन्दोमाणिक्योक्तसूत्रार्थकथनेनापि सङ्गच्छते। अत्र यतिमात्रे नियते सति चामीकरादिवत् पूर्वापरभागयोरनेकाक्षरत्वे पदमध्ययतिर्मा भूदिति पदस्यापि नियम उक्तः। तत्र स्पष्टास्पष्टविभक्तिकत्वयो र्न विशेषः। अत्र प्रथमार्या षष्ठजगणपक्षे सामान्यलक्षणोदाहरणं। षष्ठस्य चतुर्लघुत्वे पूर्वार्धद्विविधयतौ च द्वितीयार्यापूर्वार्धमुदाहरणम्। उत्तरार्द्धयतेर्लक्षणमत्र तदुत्तरार्धमिति विवेकः। अत्र विषमे जगणनिषेधात् प्रत्येकं चत्वारो विकल्पाः। यथा ऽऽ (१) ॥ऽ (२) ऽ॥ (३) इति। समस्थाने तु जगणस्यानिषेधात् प्रत्येकं पञ्च यथा ऽऽ (१) ॥ऽ (२) ।ऽ। (३) ऽ॥ (४) इति। ततश्च पूर्वार्धे प्रथमे भेदाः ४ द्वितीये ५, तृतीये ४, चतुर्थे ५, पञ्चमे ४, षष्ठे २ जन्लयोरेव विकल्पनात्, सप्तमे ४, अष्टमे गुरुरेकः। एतेषामन्योन्यगुणने द्वादश सहस्राणि अष्टौ शतानि पूर्वार्धभेदः। उत्तरार्धे तु षष्ठे लघुनियमनात् तदतिरिक्तं सर्वं पूर्ववदेव। तथा चान्योन्यगुणने षट् सहस्राणि चत्वारि शतानि भेदा उत्तरार्धे। उभयविकल्पानां परस्परगुणने अष्टौ कोटय एकोनविंशति लक्षाणि विंशतिः सहस्राणि इयमार्यायाः भेदसङ्ख्या॥ अङ्कतोपि ८१९२०००० । तदुक्तं 'जगणविहीना विषमे चत्वारः, पञ्च युजि, जगणनलौ। षष्ठे द्वाविति च गणा तथान्तगः प्रथमदलसंख्या। एवं ये परार्धसंख्या षष्ठे स्याल्लघुनि चैकस्मिन्। आर्याया सङ्ख्योभयदलसङ्घाता विनिर्दिष्टा' इति। अत्रैव प्रसङ्गादार्यायासु नष्टो द्दिष्टे उच्येते। लोके प्रसिद्धनामा विद्याविद्याविनोदविभवानां। जयतीह शुद्धचरितो रामेशाख्यो गुरुः काश्यां॥ यदा कश्चित् जिज्ञासेतेयमार्याया कतिधेति तदास्या गणान् स्थापयेत् गगणाधश्चतुःपञ्चादिकं संख्याविकल्पं यथासंख्यं स्थापयेत्। तत उपान्त्यमन्त्येन हत्वा इष्टाद्विकल्पादधस्तनान् शेषान् विकल्पसंख्यापूरकान् विकल्पानपनीय शेषया संख्यया तदाद्यगुणकविकल्पाङ्कं हत्वा इष्टविकल्पाधस्तनविकल्पान् राशेरपनीय शेषाङ्कं पूर्वपूर्वेण गुणयित्वा इष्टविकल्पाधस्तनविकल्पाङ्कं पातयेत्। एवं यावदाद्यं गणं कुर्यात्। शेषसंख्ययार्यासंख्यां जानीयात्। अत्र सर्वान्तगुरुमध्यगुर्वादिगुरुसर्वलघु-

क्रमेणावस्थानेऽधस्तनत्वं ज्ञेयं। अत्र न्यासः ऽऽ, ।ऽ।, ऽऽ, ऽऽ, ऽऽ, ।ऽ।, ।।ऽ, ऽ. ।।ऽ, ।ऽ।, ।।ऽ, ऽऽ, ऽऽ, ।, ऽऽ, ऽ. अत्र अन्ते न्यस्तस्यार्धगणस्य विकल्पाभावादधस्तनैकाङ्कस्तत्र द्वितीयेऽर्धे समाप्तेऽधस्तनैश्चतुर्भि र्गुणने जाता श्चत्वारः सप्तमस्तत्र दृष्टस्तत्र सर्वगुरुत्वात् तस्त्राधस्तनान् ज ।ऽ। गणव्यतिरिक्तानन्तगुर्वादिगुरुसर्वलघूस्त्रींश्चतुर्षु पातयेत् शेष एकः षष्ठस्तत्र लघुमात्ररूपत्वाद् विकल्पाभावः पञ्चमाधस्थचतुर्भिरेकगुणने कृत्वापि पूर्ववत् त्रयाणां त्यागे शेषस्त्वेकस्तत्र चतुर्थाधस्थपञ्चमहृतौ चतुर्षु शेषस्त्वेकस्तत्र तृतीयाधस्थै श्चतुर्भिर्हृतौ शेषयोर्द्वयोस्त्यागे शेषद्वयस्तत्र द्वितीयस्थैः पञ्चभि र्हृतौ द्वये त्यक्ते शेषा अष्टौ। तेषां प्रथमस्थै श्चतुर्भि र्हृतौ जगणातिरिक्ते द्वये त्यक्ते त्रिंशत्। एवमुत्तरार्धं पूर्वार्धान्त्यगणार्धं त्वविकल्पं सप्तमस्थै श्चतुर्भि स्त्रिंशतो हृतौ द्वये पातिते शतमष्टादशाधिकं तस्त्र षष्ठस्थाभ्यां द्वाभ्यां हृतौ एकस्त्र त्यागे पञ्चत्रिंशदधिकं शतद्वयं शिष्टम्। तस्त्र पञ्चमस्थैश्चतुर्भि र्हृतौ त्रिषु पातितेषु शिष्टा सप्तत्रिंशदधिका नवशती। तस्त्रां चतुर्थस्थैः पञ्चभिर्हृतायां चतुर्णां त्यागे एकाशीतत्र्यधिकानि षट्चत्वारिंशच्छतानि। तेषु तृतीयस्थैश्चतुर्भि र्हृतेषु त्रिषु पातितेषु अष्टादश सहस्राणि एकविंशतत्र्यधिकानि सप्त शतानि च। तेषां द्वितीयस्थैः पञ्चभि र्हृतौ द्वयोरपाये सहस्राणां त्रिनवतिः त्र्यधिका षट् शती च। तस्त्रां प्रथमस्थैश्चतुर्भिर्हृतायां त्र्यत्यागे सिद्धोऽङ्को लक्षत्रयं चतुःसप्ततिः सहस्राणां नवाधिकानि चत्वारि शतानि च। अङ्कतोऽपि ३७४४०९। एतावत्संख्येयं पूर्वोक्ता आर्या भवति। तदुक्तं 'गणानुद्दिष्टगाथायाः संस्थाप्य तदधो लिखेत्। चतुःपञ्चादिकां संख्यां स्थानस्थानोचितां ततः। हत्वा हत्वाद्यमन्त्येन चोपरिस्थाद् गणादधः। पृथग् घातगणेभ्योऽथ गणसंख्यां विकल्पयेत्॥ हताङ्कार्योचिता तावद्यावदाद्याङ्कसम्भवः। तत्संख्यामुद्दिशेद्गाथामुद्दिष्टप्रतत्रये बुधः' इति। इति आचार्योद्दिष्टविधिः। अथ तत्र नष्टं यदा लक्षत्रयं चतुःसप्ततिसहस्राणि चत्वारि शतानि नवचेतत्र-तत्संख्यार्यत्रा कीदृगिति जिज्ञासा तदा नष्टाङ्कां लिखित्वा आदिभूतगण-

विकल्पैर्भागं हरेत्। भागे हृते यः अङ्कः शिष्टः तत्संमितं तद्गणविकल्पेषु गणं लिखेत्। भागहारे यल्लब्धं तत्सैकं कृत्वा पुनः पुनरुत्तरगणविकल्पैर्भागे हृते भाज्यशेषं संख्याङ्को गणस्तत्तद्गणविकल्पेषु पूर्वस्थापितगणानन्तरं स्थाप्यः। इत्येवं यावत्पूर्त्ति कार्यम्। यत्र तु गणविकल्प एवेष्यते तत्र तत्संख्य एव गणो ग्राह्यः। परं लब्धं सैकं न कार्यं शिष्टं पूर्ववत्। तद्यथा प्रथमगणस्य चतुर्विकल्पत्वाच्चतुर्भिः पूर्वोक्ते नष्टाङ्के हृते लब्धं त्रिनवतिसहस्राणि द्व्यधिकानि षट्शतानि च शेष एकाङ्क इति। प्रथमगणविकल्पेषु प्रथमः सर्वगुरुः स्थाप्यः। लब्धे सैके कृते द्वितीयगणस्य पञ्चविकल्पत्वात्तैर्भक्ते लब्धं सहस्राण्यष्टादशविंशत्यधिकसप्तशती च शेषास्त्रय इति। तद्विकल्पेषु तृतीयो मध्यगुरुः स्थाप्यः। लब्धे सैके तृतीयस्य चतुर्विकल्पत्वात्तैर्भक्ते लब्धं अशीत्यधिकषट्चत्वारिंशच्छती शेष एक इति। तद्विकल्पेष्वाद्यः सर्वगुरुः कार्यः। लब्धे सैके चतुर्थः पञ्चविकल्प इति पञ्चभिर्भागे लब्धं नवशती षट्त्रिंशदधिका शेष एक इति। तद्विकल्पेष्वाद्यः सर्वगुरुः स्थाप्यः। लब्धे सैके पञ्चमस्य चत्वारो विकल्पा इति तैर्भक्ते लब्धं (चतुस्त्रिंशदधिकं शतद्वयं शेष एक इति तद्विकल्पेषु सर्वगुरुः स्थाप्यः। लब्धे सैके षष्ठस्य जगणनलयोरेव विकल्पाद्द्वाभ्यां भक्ते लब्धं सप्ताधिकशतं शेष एक इति तद्विकल्पयोराद्यो मध्यगुरुः स्थाप्यः। लब्धे सैके सप्तमस्य चत्वारो विकल्पा इति तैर्भक्ते लब्धम्) एकोनत्रिंशत् शेषं द्वयमिति तद्विकल्पेषु द्वितीयोऽन्तगुरुः। ततः सर्वार्थानियतं गुरुं न्यसेत्, एवं पूर्वार्धं सिद्धम्। ततो लब्धे सैके आर्योत्तरार्धादिगणश्चतुर्विकल्प इति चतुर्भक्ते लब्धं सप्त शेषं द्वयमिति। द्वितीयविकल्पोऽन्तगुरुः। लब्धे सैके, द्वितीयस्य पञ्च विकल्पा इति तैर्भक्ते लब्धं एकः शेषं त्रयः इति तृतीयविकल्पो मध्यगुरुः। लब्धे सैके तृतीय श्चतुर्विकल्प इति चतुर्भिर्भक्ते लब्धं शून्यं शेषं द्वे इति द्वितीयविकल्पोऽन्तगुरुः। लब्धे शून्यं सैके चतुर्थः पञ्चविकल्प इति पञ्चभि भागे लब्धं शून्यं शेष एक इति प्रथमविकल्पः सर्वगुरुः लब्धे सैके पञ्चमश्चतुर्विकल्प इति तै भक्ते लब्धं शून्यमवशेष एक इति प्रथमविकल्पः सर्वगुरुः। षष्ठो

लघुरेक एव तस्य नियतत्वात्। लब्धे सैके सप्तमश्चतुर्विकल्प इति तैर्भक्ते लब्धं शून्यं शेष एक इति प्रथमः सर्वगुरुः। अन्ते एको गुरुर्लेख्यो नियतत्वात् एवं सतेऽत्रताद्दशीयमिति पूर्वोक्तामेव आर्य्यां वदेत्। तदुक्तं 'नष्टाङ्के प्रथमं भक्ते गणाङ्कैश्चतुरादिकैः। शेषसंख्यो गणो ज्ञेयो लब्धं कुर्य्यात् सरूपकम्॥ पुनः भजेत् पुनर्लब्धं सरूपं शेषसङ्ख्यया। गणान् दद्याद्गणे शेषे गाथाथ प्रागगणक्रमः॥' इति। एवमार्य्यादिषु गीत्यादिषु च ज्ञेयम् इत्यार्य्यानष्टविधिः। अथ कश्चिदार्य्याविशेषानाह।

त्रिष्वंशकेषु पादो दलयोराद्येषु दृश्यते यस्याः।
पथ्येति नाम तस्याः प्रकीर्त्तितं नागराजेन॥ ३॥

आद्येषु त्रिषु अंशकेषु चतुर्मात्रेषु त्रिषु गणेषु यस्या दलयोरर्धयोः पादो दृश्यते कविप्रयोगेषु तस्याः आर्य्याया नागराजेन श्रेष्ठेन पिङ्गलेन पथ्येति नाम प्रकीर्तितम् उक्तं 'त्रिषु गणेषु पादः पथ्याद्ये च' इति सूत्र इत्यर्थः। सर्वत्रात्र ऋषिनामनिर्देशः समूलताप्रदर्शनार्थः, मतत्र्यन्यतमत्वप्रदर्शनार्थः। इदमेवात्रोदाहरणम्। एवमुत्तरत्रापि।

संलङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः।
यस्यास्तां पिंगलनागो विपुलामिति समाख्याति॥ ४॥ इति।

यस्या आर्य्यायाः आद्यं गणत्रयं लङ्घयित्वा परतो यत्र क्वचित् द्वयोः शकलयोरर्धयो र्व्यस्तयोः समस्तयोर्वा पादयोर्यतिः स्यात् तामार्य्यामित्यंप्रकारतया पिङ्गलनागो विपुलां समाख्याति कथयति 'विपुलान्येति' सूत्रम्। इति शब्दं प्रकारवचनमङ्गीकृत्य व्याख्येयं तेन इतिनानुक्तत्वाद्विपुलामिति कर्मणि द्वितीया न विरोधः प्रकारवाचिनेतिशब्देन चपलादीनामपि गणत्रयानन्तरं विरामत्वप्रकारे सति विपुलात्वमपि भवतीति संकीर्णभेदा अपि संगृहीताः। इयञ्च त्रिविधा पूर्वार्द्ध एव त्रिगणानान्त इतिविरामा मुखविपुला, उत्तरार्धे एताद्दृग् जघनविपुला, उभयोरर्धयोस्ताद्दृगुभयविपुलेति। इयमेव महाविपुलेति। तत्र षष्ठे इत्यादिमूलस्याद्या। द्वितीया ममैव यथा,

करुणाविषये करुणा करुणावरुणालयाशु मयि धेहि । राघव करुणाशील-वतां विषमा मानसी वृत्तिः ॥ तृतीयामूलस्यैव ।

उभयार्धयो र्जकारौ द्वितीयतुर्यौ गमध्यजौ यस्याः ।
चपलेति नाम तस्याः प्रकीर्तितं नागराजेन ॥ ५ ॥ इति ।

यस्या द्वयोरर्धयोर्व्यस्तयोः समस्तयोर्वा द्वितीयचतुर्थौ गणौ पश्चात् पुरः-स्थितगुरुमध्यगौ जगणौ स्यातां सा आर्या चपला । एतदुक्तं भवति प्रथमो गणो द्विगुरुः अन्तगुरुर्वा तृतीयो द्विगुरुः पञ्चमो द्विगुरुः आदिगुरुर्वा द्वितीय-चतुर्थौ मध्यगुरू नियतमस्यामिति । अत्राद्यार्धे प्रथमे द्वौ विकल्पौ ऽऽ, ॥ऽ, द्वितीये एकः ।ऽ।, तृतीयेऽप्येकः ऽ ऽ, चतुर्थेऽप्येकः ।ऽ।, पञ्चमे द्वौ ऽ॥, ऽऽ, षष्ठे द्वौ ।ऽ।, ॥॥, सप्तमे चत्वारः ॥॥, ऽऽ, ऽ॥, ॥ऽ, अष्टमे गुरु-रेव अन्योन्यगुणने द्वात्रिंशत् ॥ उत्तरार्धे षष्ठस्य लघुतामात्रत्वात् षोडश १६ ॥ उभयार्द्धविकल्पानां अन्योन्यगुणने द्वादशाधिकपञ्चशती विक-ल्पानाम् अङ्कतोऽपि ५१२ मुखविपुलादीनां सूत्रकारानुक्तत्वात् स्वयं स्फुट-तयानुक्तावपि चपलाभेदौ सूत्रोक्तत्वाल्लक्षयति ।

आद्यं दलं समस्तं भजेत लक्ष्म चपलागतं यस्याः ।
शेषे पूर्वजलक्ष्मा मुखचपला सोदिता मुनिना ॥ ६ ॥ इति ।

यस्या आर्याया आद्यं प्रथमं दलं अर्धं चपलान्वितं लक्ष्म लक्षणं भजेत शेषे द्वितीयार्धे पूर्वजं सामान्यार्याभवं लक्ष्म यस्याः सा तथा सा मुनिना पिङ्गलेन मुखचपलोक्ता । अत्र चपलापूर्वार्द्धविकल्पानां द्वात्रिंशताम् आर्यापरार्द्धविकल्पानां चतुःषष्टिशतरूपगुणानां परस्परताडनेन द्वौ लक्षौ चत्वारि सहस्राणि अष्टौ शतानि च विकल्पा भवन्ति ॥ अङ्कतोऽपि २०४८०० ।

प्राक्प्रतिपादितमर्धे च प्रथमे प्रथमेतरे च चपलायाः ।
लक्ष्माश्रयेत सोक्ता विशुद्धधीभि र्जघनचपला ॥ ७ ॥ इति ।

प्राक्प्रतिपादितं पूर्वोक्तं लक्ष्म सामान्यलक्षणं प्रथमार्धे भवति प्रथमे-तरे द्वितीयार्धे चपलालक्षणं भवति सार्या विशुद्धा विवेकचतुरा धी बुद्धि-

येषां तैः पिङ्गलादिभि र्जघनचपलोक्ता। अत्रापि चपलायामिवोत्तरार्धविकल्पाः षोड़श विकल्पाः। पूर्वार्धे त्वष्टशताधिकद्वादशसहस्रसंख्या आर्यापूर्वार्धविकल्पाः। अविकृता एव परस्परं गुणने द्वे लक्षे चत्वारः सहस्रा अष्टौ शतानि विकल्पाः अङ्कतोऽपि २०४८०० उभयार्द्धयोश्चपलालक्षणयोगे महाचपला। सा च प्रथमैव मूले। अत्र चैका पथ्या विपुलाभेदत्रयं चेति चत्वारो भेदाः। पुनश्चैत एव प्रत्येकं चपलाभेदत्रयेण सम्पन्नाः सन्तो द्वादश एव मिलित्वा षोड़शार्याभेदः स्थूलदृशां भवति। एषां भेदानां मध्येऽनुक्तोदाहरणानि स्वबुध्या यथान्तरात्रावगन्तव्यानि अस्माभिस्तूक्तप्रायत्वाद्ग्रन्थविस्तरभयाच्च नोक्तानि।

इति श्रीनारायणभट्टविरचितायां वृत्तरत्नाकरटीकायामार्याप्रकरणम्।

---

अथार्यालक्षणज्ञानपूर्वज्ञेयस्वरूपत्वात् केश्चिदार्याभेदत्वाङ्गीकाराद्गीतिं लक्षयति।

आर्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः।
दलयोः कृतयतिशोभां तां गीतिं गीतवान् भुजङ्गेशः॥ ८॥ इति।

तदाशब्दोऽत्राध्याहार्यो यदिशब्दप्रयोगाय। तथाच यद्यार्याप्रथमार्धोक्तं लक्षणमुभयोरर्द्धयोः कथमपि विकल्पितषष्ठजगणचतुर्लघुगणान्यतमप्रकारश्च येनापि भवेत् तदा कृतयतिशोभां कृता यत्या विच्छेदात्मिकया शोभा श्रुतिसौभाग्यं यस्यास्तां। एतेनार्योक्तो यस्तद्गणविशेषे सति विरामविशेषः सोऽप्यस्यां भवतीति दर्शितं भुजङ्गेशः पिङ्गलस्तां गीतिं गीतवान् उक्तवान् 'आद्यार्द्धसमा गीतिः' सूत्रेणेत्यर्थः। ततश्चात्र द्वितीयार्धेऽपि पूर्णाः सगुरवः सप्तगणा न तु षष्ठे लघुमात्रमित्यादि ज्ञेयम्। इयमेका पथ्या तिस्रो विपुलाः द्वादश चपलाः। एतत् पूर्वोक्तत्वात् षोड़शधा। तत्र पथ्यागीति र्मूलं अन्याः स्वयमुदाहार्याः। अत्राद्यार्धे आर्या च द्वादश सहस्राण्यष्टौ शतानि च विकल्पाः। उत्तरार्द्धेऽपि तावन्त एव। परस्परहतौ कोट्यः षोड़शाष्टत्रिंशल्लक्षा श्चत्वारिंशत्सहस्राणि च विकल्पाः। अङ्कतोऽपि

१६३८४००००। पथ्यागीत्यादिचतुर्षु भेदेष्वियं संख्या ज्ञेया। द्वादशसु चपलागीतिषु पूर्वापरार्द्धविकल्पघाते सङ्ख्या स्वयमूह्या।

आर्याद्वितीयकेऽर्धे यद्गदितं लक्षणं तत् स्यात्।
यद्युभयोरपि दलयोरुपगीतिं तां मुनि ब्रूते॥ ९॥ इति।

अत्रापि तदेति विशेषः। यद्यार्याद्वितीयार्धे यदुक्तं लक्षणं षष्ठलघ्वादि तदुभयोरर्धयोः स्यात् तदोपगीतिं पिङ्गलोऽन्त्येनोपगीतिरित्यत्राहेत्यर्थः अस्यां पूर्वार्धे षट् सहस्राणि चत्वारि शतानि विकल्पाः। उत्तरार्धेऽपि तावन्त एव। अन्योन्यघाते चतस्रः कोट्यो नव लक्षाः षष्टिः सहस्राणां विकल्पाः। अङ्कतोऽपि ४०९६००००।

आर्याशकलद्वितयं व्यत्ययरचितं भवेद्यस्याः।
सोद्गीतिः किल गदिता तद्वत् यत्यंशभेदसंयुक्ता॥ १०॥ इति।

आर्याद्वयं यस्याः व्यत्ययेन विपर्यासेन यत्पूर्वार्धं तदुत्तरार्धं यदुत्तरार्धं तदेव पूर्वार्धमित्येवं रूपेण रचितं सा किलेति प्रसिद्धोद्गीतिरुक्ता तेनैव तद्वदिति पथ्याद्यार्याभेदवदेव यत्या विरामेण योऽंशभेदः पादभेदस्तेन संयुक्तेत्यर्थः। अत्रार्यावद्विकल्पसङ्ख्या। यथा ८१९२००००॥

आर्यापूर्वार्धं यदि गुरुणैकेनाधिकेन निधने युक्तम्।
इतरत्तद्वन्निखिलं भवति यदियमुदितेयमार्यागीतिः॥ ११॥ इति।

आर्यायाः पूर्वार्धं यदेकेनाधिकेन गुरुणा निधने (अन्ते) युक्तं स्यात् इतरत च द्वितीयं समस्तं यदीयमर्धं तद्वत् पूर्वार्धवत् इयमार्यागीतिरिति मुनिनोक्ता। आर्यायां हि पूर्वार्धेन गुरुकाः सप्तगणकाः इह तु पूर्णा अष्टौ गणाः अर्धद्वयेऽपि भवन्ति। अन्तिमस्तु गणो द्विगुरुरेव अन्यत् सर्वमार्यापूर्वार्धतुल्यमेवेति भावः। आर्यायाः पूर्वार्द्धविकल्पानाम् अष्टमगणे विकल्पाभावात् परस्परताडेन जातोऽङ्कः द्वादश सहस्राण्यष्टौ च शतानि पूर्वार्धे उत्तरार्धेऽपि तावदेव। अन्योन्यहतौ जातानि मुख्यगीतिवद्भेदसंख्या। अङ्क-

तोऽपि १६३८४००००। केचित्तु अत्रोत्तरार्धेऽर्धशब्दमपठित्वा इतरार्याया एवोत्तरार्धं तद्वदन्तेऽधिकैकगुरुयुक्तं स्यात् सार्यागीतिरिति। आर्यापूर्वार्धमित्यत्र समस्तं यथार्याशब्दं षष्ठ्यन्तं समासान्निष्कृष्टमनुषज्य पूर्वार्धस्याष्टगणत्वेन द्वात्रिंशन्मात्रताम् उत्तरार्द्धस्यैकोनत्रिंशन्मात्रतां चाभिप्रेत्य व्याचक्षते। भवतु नामैतद्व्याख्याकौशलं, किन्तु बहुनामसम्मतं सूत्राननुगुणं च, अर्धे वसुगणं आर्यागीतिरिति सामान्यतोऽर्धे वसुगणेऽष्टगणे सतीति। यद्वा आर्यार्धे यदि अष्टगणे स्यातामिति सूत्रकार आह केश्चित्त्वियं सङ्गीतिः संज्ञिता अपरैः स्कन्धकमिति। गीतीनामप्यार्यापूर्वकत्वादार्यात्वमस्त्येव एताश्चतस्रोऽपि गीतयः प्रत्येकं पथ्यादिपूर्वोक्तषोडशार्या मिलित्वा गीतिः। तदुक्तं हलायुधेन "एकैव भवति पथ्या तिस्रो विपुलास्ततश्चतस्रस्ताः। चपलाभेदैस्त्रिभिरपि भिन्ना इति षोडशार्याः स्युः॥" गीतिचतुष्टयमित्थं प्रत्येकं षोडशप्रकारं स्यात्। साकल्येनार्याणामशीतिरेवं विकल्पाः स्युः इति। छन्दोविरचितौ त्वेकादश परे गीतिभेदाः प्रदर्शिताः। ते यथा, आर्यैव दलद्वयेऽप्यधिकैकगुरुयुता सङ्गीतिः। ममैव यथा "आगमविदेकनिधि विबुधेन्द्रशतैरधीतनिगमविलासः। रामेश्वरभट्टगुरु र्जयति पिता मे पितामहतुल्यः" ॥ (१)। पूर्वार्ध एवाधिकैकगुरुयुक् सुगीतिर्नाम। पितामहगिति पठित्वा पूर्वमेवोदाहरणम् (२)। यद्युत्तरार्ध एव तादृक् तदा प्रगीतिर्नाम। अधीतनिगमार्थ इति पठित्वा प्रथममेवोदाहार्यम् (३)। सुगीतिरेव व्यत्यस्तार्धानुगीतिः। सुगीतुदाहरणमेव व्यत्यस्तार्धं ज्ञेयं (४)। प्रगीतिरेव व्यत्यस्तार्धा मञ्जुगीतिः। प्रगीत्युदाहरणम् व्यत्यस्तार्धमत्रोदाहरणम् (५)। यद्यधिकैकगुर्वार्योत्तरार्धेन पठितार्धद्वया तदा विगीतिः। ममैव यथा "विषयान् विषधरविषमान् संहृतिमपि नीरसां ज्ञातवतः। संसारभूते दशरथबाले मतिरतिस्थैर्यमियात्॥"(६)। यद्युद्गीति र्द्वयोरप्यर्धयोरधिकगुरुयुक्ता तदा चारुगीतिः। अत्र पूर्वोक्तं सङ्गीत्युदाहरणमेव विपर्यस्तार्धं ज्ञेयम् (७)। आर्यागीतेरेवैकगुरुहीनोत्तरार्धतायां वल्गुगतिः॥ ममैव यथा 'पीतोन्नतकुचकलशा पीवरजघनोरुभारमन्थरयाता। पश्यन्ती प्रणयेन त-

रणी कं वा न चालयेत् पुरुषम्' (८)। तस्या एव पूर्वार्धं एव तथा चेच्चलितेति संज्ञा। अर्धयोर्व्यत्यासेन पूर्वमेवोदाहरणम् (६)। उपगीतिरेवाद्यार्धेऽधिकै-कगुरुयुता प्रमदा नाम। ममैव यथा "यस्य विलासवतीनां केलिकलाकौशल-रतिर्विरतिः। मैथुनमात्ररसज्ञः शृङ्गविहीनः पुमान् स पशुः।" (१०) सैवोत्तरार्धेऽधिकैकगुरुयुता चन्द्रिका नाम। व्यत्यस्तार्धं पूर्वमेवोदाहर-णम् (११)। एतासामपि पूर्वोक्तपथ्यादिषोडशार्यानां संभिन्नतया प्रत्येकं षोडशधात्वे सति सङ्ख्या (१७६)। एतासामुदाहरणानि स्वयमूह्यानि, विस्तरभयात्तु नोच्यन्ते। पूर्वोक्तानां चतुर्विधगीतीनां च तथैव षोडशधात्वे सङ्ख्या ६४। ऐक्येन गीतिसङ्ख्या २४०॥ पूर्वोक्त-षोडशशुद्धार्याभेदैक्येन सङ्ख्या २५६।

इति श्रीनारायणभट्टविरचितायां वृत्तरत्नाकरव्याख्यायां गीतिप्रकरणम्।

---

मात्राच्छन्दसां प्रकृतत्वाद्वैतालीयप्रकरणमारभते।

षड् विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः।
न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः॥ १२॥ इति

वैतालीये छन्दसि विषमे अर्थात् पादे प्रथमे तृतीये च षट् कला मात्राः स्युः समे पादे द्वितीये चतुर्थे चाष्टौ कलाः स्युः अन्ते उक्तानां कला-नामन्ते परस्ताद् रलौ रगणलघू गुरुश्च भवतीति वैतालीयस्वरूपपरिच्छेदः एतदुक्तं भवति विषमे पादे चतुर्दश समे च षोडश मात्राः कार्यास्तन्मध्येऽ न्तिमाः अष्टौ मात्राः रेफलघुगुरुभिः कार्या इति। विषमे पश्चात् षट् समेऽष्टौ अवशिष्यन्ते तासां निवेशने नियमविशेषमाह ताश्चेति। समे ताः षट् कला निरन्तराः केवलाः षट् लघव एव न कार्याः किन्तु गुरुमिश्रा इत्यर्थः। समे विशेषोक्त्या विषमे स्वरुचिः। अत्रावशिष्टासु षट्सु अष्टसु च कला द्वितीया चतुर्थी षष्ठी च परया तृतीयपञ्चमसप्तमकलया आश्रिता मिलिता न

भवन्ति, द्वितीयतृतीयकलादीनामेकेन गुरुणोपादानं न कार्यमित्याशयः। अत्र विषमपादयोराद्यासु षण्मात्रासु अष्टौ विकल्पाः यथा ऽऽऽ, ऽ।।ऽ, ।।ऽऽ, ।।।।।। ऽऽ।।, ।।ऽ।।, ऽ।।।।, ।।।।ऽ, समपादयोराद्यास्वष्टमात्रासु त्रयोदश विकल्पाः॥ ऽऽऽऽ, ऽऽऽ।।, ऽऽ।।ऽ, ऽऽ।।ऽ, ऽ।।ऽऽ, ।।ऽऽऽ, ऽऽ।।।।, ऽ।।ऽ।।, ऽ ।।।। ऽ, ।।।।ऽऽ, ।।।।ऽऽ, ।।ऽ।।ऽ, ऽ।।।।।।, ।।ऽ।।।।, ।।।।ऽ।।. एते अर्थाभिवर्णक्रमेण निबद्धाः केचित्। मीनाङ्काः १सुरसन्नैः २ पङ्कजै ३ भरितजलाः ४ ततसारस ५ खगसंभृत ६ सज्जनमुदि ७ तवनककुभि ८ एते विषमे पादे। हंसस्मे १ अलिके नद्यो २ नीरजवक्त्राः ३ कुवलयनेत्राः ४ सुस्वच्छजलाः ५ सुतरङ्गभुजाः ६ केशरदशना ७ राजन्ते कृत ८ जनहर्षा भुवि ९ शरणदा त्रिषु वि१० मलनिशाकरा ११ भानुप्रभृतिषु १२ ननु पश्य सुतनु १३ एते समे। ततोऽष्टभिस्त्रयोदश-गुणिताश्चतुरधिकं शतं वैतालीयस्याद्यार्धे भेदाः। एतावन्त एवापरार्धे। परस्परहतौ जातं दश सहस्राण्यष्टौ शतानि षोड़श च। अङ्कतोऽपि १०८१६। इयमेवौपच्छन्दसिकापातलिकयो र्वक्ष्यमाणयोः सङ्ख्या। वैतालीय-भेदानाह।

पर्यन्ते र्यौ तथैव शेषमौपच्छन्दसिकं सुधीभिरुक्तम्॥ १३॥ इति।

विषमसमपादयोः षण्णामष्टानां च कलानामन्ते र्यौ रेफयगणौ स्यातां, शेषं षड़ष्टककलानियमादीनि तथैव सामान्यवैतालीयवदेव यदा तदा च्छन्दोविद्भिरौपच्छन्दसिकसंज्ञं वैतालीयमुक्तम्। वैतालीय एव प्रतिचरणमेक-गुर्वाधिक्येन विषमपादे षोड़श समपादे चाष्टादश मात्राः कार्या इति भावः।

आपातलिका कथितेयं भाद्गुरुकावथ पूर्ववदन्यत्॥ १४॥ इति।

षण्णामष्टानां च मात्राणां पर्यन्ते भाद्भगणात् परौ गुरुकौ गुरू स्यातामिति रेफलघुगुरूणामपवादः अथान्यत् शेषं पूर्ववद्वैतालीयवत्। सेयमापातलिका सुधीभिः कथितेति पर्यन्तसुधीशब्दानुषङ्गेण योज्यम्।

तृतीययुग्दक्षिणान्तिका समस्तपादेषु द्वितीयलः ॥ १५ ॥ इति।

समस्तेषु चतुर्ष्वपि पादेषु द्वितीयलो द्वितीया मात्रा तृतीयया युग् युक्ता चेत् स्यात् तदा दक्षिणान्तिका नाम स्यादिति। चेत्तदाशब्दयोरध्याहारः कार्य्यः। सर्व्वेषु पादेषु द्वितीयो वर्णो गुरुरेव कार्य्य इति न समात्र पराश्रिता कलेत्यस्यापवादः शेषं यथाप्राप्तमिति भावः। इयं वैतालीयौपच्छन्दसिकापातलिकापूर्व्वकत्वेन त्रेधोदाहार्या। अस्मिन् भेदत्रयेऽपि विषमपादयोर्विकल्पौ द्वौ यथा ।ऽ।ऽ, ।ऽ।।।. समयोश्चत्वारो यथा ।ऽ।ऽऽ, ।ऽ।।ऽ, ।ऽ।ऽ।।, ।ऽ।।।।।. द्वयोश्चतुर्णां च परस्परहतौ अष्टौ पूर्व्वार्द्धे द्वितीयार्धेऽपि तावन्त एव। तयोरन्योन्यघाते चतुःषष्ठिभेदा भवन्ति।

उदीच्यवृत्ति द्वितीयलः सक्तोऽग्रेण भवेदयुग्मयोः ॥ १६ ॥ इति।

अयुग्मयोर्विषमयोः प्रथमतृतीययोः पादयो र्द्वितीयलो द्वितीयमात्रा अग्रेण तदग्रिमेण लेन सक्तो युक्तश्चेत् तदा उदीच्यवृत्तिरुदितेति वक्ष्यमाणानुषङ्गः शेषं यथाप्राप्तम्। इयं वैतालीयौपच्छन्दसिकापातलिकापूर्व्वकत्वेन त्रेधोदाहार्य्या अत्र द्वौ विषमयो र्विकल्पौ यथा ऽऽ।।, ऽ।।।। समयोः पूर्व्वोक्तास्त्रयोदश। परस्परहतौ षड्विंशतिः पूर्व्वार्धभेदाः। तावन्त एवापरत्र। परस्परहतौ जाता भेदाः षट् शतानि षट्सप्ततिश्च। अङ्कतोऽपि ६७६।

पूर्व्वेण युतोऽथ पञ्चमः प्राच्यवृत्तिरुदितेति युग्मयोः ॥ १७ ॥ इति।

अथेति यदीत्यर्थे वैलक्ष्ये वा निपातानामनेकार्थत्वात्। युग्मयो र्द्वितीयचतुर्थपादयोः पञ्चमो लः पञ्चमी मात्रा पूर्व्वेण चतुर्थेन लघुना यदि युतः एकेन गुरुणा चतुर्थपञ्चममात्रयोरुपादानं यदि स्यादित्यर्थः तदा प्राच्यवृत्तिरुदितोक्ता पिङ्गलादिभिरिति। समासान्निष्कृष्टलशब्दमनुषज्य व्याख्येयं शेषं यथाप्राप्तम्। अनयोरपि उदीच्यवृत्तिप्राच्यवृत्त्यो र्न समात्र पराश्रिता कलेत्यस्य पूर्व्ववदेवापवादः। सेयमपि पूर्व्ववत् त्रेधा ॥ अत्र विषमयोः पूर्व्वोक्ता अष्टौ विकल्पाः। समयोश्चत्वारः यथा। ऽ।ऽ।ऽ, ।।।ऽ।ऽ, ऽ।ऽ।।।, ।।।ऽ।।।. अष्टानां

चतुर्भिर्हतौ द्वात्रिंशत् पूर्वार्धभेदाः तावन्त एवोत्तरार्धे। परस्परहतौ भेदाश्चतुर्विंशत्यधिकसहस्रं। अङ्कतोऽपि १०२४।

यदा समावोजयुग्मकौ पूर्वयो र्भवति तत् प्रवृत्तकम्॥ १८॥ इति।

यदा पूर्वयोरुदीच्यवृत्तिप्राच्यवृत्त्योः समौ तुल्यौ क्रमेण ओजयुग्मकौ विषमसमपादौ स्यातां तत् तदा प्रवृत्तकं नाम। विषमयोः प्रथमतृतीययोः पादयोः द्वितीयतृतीयमात्रायोगः। समयोस्तु चतुर्थपञ्चममात्रायोगः स्यादिति भावः। इदं वैतालीयौपच्छन्दसिकापातलिकापूर्वकत्वेन त्रेधोदाहार्यम्। अत्र पूर्वोक्तविषमसमविकल्पानामन्योन्यहतौ संख्या स्वयमूहनीया। एवमपरान्तिकादिष्वपि।

अस्य युग्मरचितापरान्तिका॥ १९॥ इति।

अस्य प्रवृत्तकस्य युग्मपादैर्या सम्पूर्णा रचिता साऽपरान्तिका नाम। पञ्चमी चतुर्थमात्रायुक्ता षोडशमात्रता चतुर्ष्वपि पादेषु कार्येत्यर्थः। इयं च वैतालीयौपच्छन्दसिकापातलिकापूर्वकत्वेन पूर्ववत् त्रेधा। कश्चित् अस्य वैतालीयादिच्छन्दोवृन्दस्य युग्मरचितेति व्याचख्यौ। तन्मते वैतालीयादिपूर्वकत्वेन तत्पूर्वकप्राच्यवृत्तिपूर्वकत्वेन च षोढा। उदाहरणानीति तु स्वयमूह्यानि। भेदाः २५६॥

अयुग्भवा चारुहासिनी॥ २०॥ इति।

अस्य प्रवृत्तकस्यायुग्भवायुक्पादैः विषमपादै रचिता चारुहासिनी। समस्तपादेषु चतुर्दशमात्राः द्वितीया तृतीयायुक्ता कार्येत्यर्थः। इयमपि पूर्ववत् त्रेधा। अस्येति वैतालीयादिच्छन्दोवृन्दपरत्वेन व्याचक्षाणस्य मते तु वैतालीयौपच्छन्दसिकापातलिकातदुदीच्यवृत्तिपूर्वकत्वेन षोढा। उदाहरणानि ऊह्यानि। भेदाः २५६। अन्येऽपि भेदा अन्यैरुक्तास्ते स्वकीयैरुदाहरणैः प्रदर्श्यन्ते। यथा वैतालीयसमपादचतुष्टययुतान्त्ये यं दक्षिणान्तिका। यथा,— पुरुषश्रेष्ठ तमः स पुरुषो विषयैर्यस्य मनो हृतं न हि। पुरुषचतुरतरः स पुरुषो विषयैर्यस्य मनो हृतं मुक्तः॥ वैतालीयविषमपादरचितोत्तरान्तिका।

यथा,—विषयान् विषमान् विषोपमानवधार्य्य ततोऽवधीर्य्य च। कुरु सर्वक-चिन्तनं सदा यदि ते हितमीहितं स्वकम्॥ तथा आपातलिकाप्राच्यवृत्त्यो र्विषमसमपादाभ्यां यत् क्रमेण रचितोर्धपातलिका नाम। यथा, यः पुरतो वक्त्यतिमिष्टं दोषभाषणरतः परोक्षतः। वाञ्छसि सौख्यं त्यज तं द्राङ्मित्रसंज्ञितमरिं विषोपमम्॥ तथाद्यापातलिकादीनां सप्तानां छन्दसां प्रतिपादमन्तेऽधिकैकगुरुयोगः स्यात् तदा तन्नामकान्यौपच्छन्दसिकानि सप्त भवन्ति। तत्रापातलिकौपच्छन्दसिकम् यथा, आपातलिकादिषु चेदेको गुरु-रधिको भवति प्रतिपादान्ते। आपातलिकादिकसंज्ञायुगौपच्छन्दसिकं तदाऽ-भिप्रेतम्। एवं दक्षिणान्तिकौपच्छन्दसिकादौ ग्रन्थगौरवप्रसङ्गादस्मदनुक्तान्यु-दाहरणान्यूह्यानि। एवं च वैतालीयसंख्या सप्तत्रिंशत् ३७।

इति श्रीनारायणभट्टविरचितायां वृत्तरत्नाकराख्यायां
वैतालीयप्रकरणम्॥

---

अथ वक्त्रस्याष्टाक्षरत्वेनानुष्टुभि वक्त्रस्य व्यवस्थायामपि तद्वत् सकलनि-यतगुरुलघुत्वाभावात् पथ्याचपलादिसंज्ञा कार्य्या। मात्रावृत्तनामसौकर्य्याच्च मात्रावृत्तप्रस्ताव एव लक्षणमाह॥

वक्त्रं नाद्यान् नसौ स्यातामब्धेर्योऽनुष्टुभि ख्यातम्॥ २१॥ इति।

आद्यादक्षरादूर्ध्वं नगणसगणौ न स्यातां,मगणादि र्य्थेच्छं स्यात्, अब्धे-श्चतुर्थादक्षरादूर्ध्वं यः यगणः स्याद यदि तदा वक्त्रं ख्यातं तच्चानुष्टुभि ख्यात-मुक्तमाचार्य्यैरिति। यदातदाशब्दाध्याहारेण ख्यातशब्दावृत्त्या च व्याख्येय यथा आद्याब्धेश्चेति गणग्रहणमपि सम्भवति तथानुष्टुभि ख्यातमित्यष्टाक्षरत्व-सूचनागणचतुष्टयासम्भवादब्धिग्रहणं स्यात् अक्षरपरता। आद्यग्रहणस्यापि च तत्समभिव्याहाराद्गणग्रहणे चतुर्थाक्षरमादाय गणारम्भाच्चतुर्थाक्षरादूर्ध्वं यगणारम्भायोगाच्चाक्षरपरतैव। आद्यात् परतो नगणसगणनिषेधे न द्वितीय-तृतीयवर्णात् परस्य गुरु नावश्यं भवतीति सूचितम्। अनुष्टुभि ख्यात-

मित्यनेनाष्टाक्षरपादता सूचिता । अतश्चानुक्तोऽप्यष्टमो वर्णो ज्ञेयः । समयो-श्च पादयोः प्रथमादक्षरादूर्ध्वं रगणोऽपि न कार्य्य इति सम्प्रदायः । अत्रादेर पादे प्रथमस्थाने गुरुलघुरूपौ द्वौ विकल्पौ, द्वितीये नसनिषेधाच्छेषाः षड् गणाः, तृतीयस्थाने एको य एव, चतुर्थे स्थाने ग्लौ । अन्योन्यघाते चतुर्विंशतिः । एवं द्वितीयादिपादत्रयेऽपि प्रत्येकं चतुर्विंशतिः । तेषां परस्परहतौ जाता त्रयो लक्षाः एकत्रिंशत् सहस्राणि सप्त शतानि षट्सप्ततिः सङ्ख्या । अङ्कतोऽपि ३३१७७६ । एषैव संख्या प्रत्येकं पथ्यावक्त्रादिषु विषूह्या । सम्प्रदायमाश्रित्य द्वितीयचतुर्थपादयो र्द्वितीयस्थाने रगणस्यापि निषेधात् समयोः प्रत्येकं विंशति भेदाः विषमयोश्चतुर्विंशतिरेव । तेषामन्योन्यघाते जाता सङ्ख्या लक्ष-द्वयं त्रिंशत् सहस्राणि चत्वारि शतानि । अङ्कतोऽपि २३०४०० । अग्रेऽर्थे इत्य-स्यापवादेनास्यैव भेदानाह ।

युजो र्जेन सरिद्भर्तुः पथ्यावक्त्रं प्रकीर्त्तितम् ॥ २२ ॥ इति ।

युजो र्युग्मयो र्द्वितीयचतुर्थचरणयोः सरिद्भर्त्तुश्चतुर्थाक्षरात् परेण जग-णेन पथ्यावक्त्रं प्रकीर्त्तितम् । पिङ्गलेन 'पथ्या युजो ज्' इति सूत्र इत्यर्थः । विषमयोस्तु यगणः सामान्यप्राप्तः ।

ओजयो र्जेन वारिधेस्तदेव विपरीतादि ॥ २३ ॥ इति ।

विषमपादयोश्चतुर्थादूर्ध्वं जगणे तदेव पथ्यावक्त्रं विपरीतशब्दादि विपरीतपथ्येति ज्ञेयमित्यर्थः । समयो र्य एव ॥

चपलावक्त्रमयुजो र्नकारश्चेत् पयोराशेः ॥ २४ ॥ इति ।

अयुजो र्विषमयोः पयोराशेश्चतुर्थान्नकारश्चेन्नगणश्चेच्चपलावक्त्रं । सम-योर्य एव ।

यस्यां लः सप्तमो युग्मे सा युग्मविपुला मता ॥ २५ ॥ इति ।

युग्मे द्वितीये चतुर्थे च पादादेः सप्तमो वर्णो लो लघु र्यस्याः सा विपुला मता सम्मता । यद्यपि पथ्यायामपि युजोः सप्तमो लस्तथापि तत्र जगणेनैव ।

अत्र तु नजभतैः सप्तमस्य लघुतेति न सङ्करः। तथापि जगणपक्षे सङ्कर एवेति चेत्, तर्हि तत्र संज्ञाविकल्प एवास्तु। ये त्वत्र जेव सप्तमेनैव लघुतेति असङ्करमाहुस्तेषां मूलस्य लक्ष्यविरोधो जगणेन लघुकरणात्। 'सैतवेन पयार्णवं तीर्णो दाशरथात्मजः। रक्षःक्षयकरीं पुनः प्रतिज्ञां स्वेन बाहुना' इति सैतवमतेन विपुलोदाहरणे जकारेणैव वृत्तिकृता लघुकरणात् तद्विरोधश्चेति पूर्वमेवोत्तरं युक्तं संज्ञाविकल्प इति। अत्र समपादयोस्तृतीये स्थाने चत्वारो विकल्पाः शेषेषु प्राग्वत्। तेन समयोः परस्परहतौ षण्णवति भेदाः, विषमयोः प्रत्येकं पूर्ववच्चतुर्विंशतिः परस्परहतौ सङ्ख्या त्रिपञ्चाशल्लक्षाः अष्टौ सहस्राः चत्वारि शतानि (षोडश)। अङ्कतोऽपि ५३०८४१६। अत्रायुग्मे यस्यां लः साऽयुग्मविपुलेति अकारप्रश्लेषेणापि केचिद् व्याचक्षते। पादत्र्यत्ययं यत्रोदाहरणमाहुः। विपरीतपथ्याचपलावक्त्राभ्यां चैव भेदः। तत्र जगणनगणाभ्यां सप्तमस्य लघुता, अत्र तु भताभ्यामपि तथात्वमिति। उदाहरणं च सप्तमस्य लघुत्वमात्रतात्पर्येण जगणेन न त्वभावेनोक्तमिति चाहुः।

सैतवस्याखिलेष्वपि ॥ २६ ॥ इति।

सैतवस्याचार्यस्य मतेऽखिलेष्वपि पादेषु सप्तमो लः स्यादिति सूत इत्यध्याहारेण सप्तमो ल इति पादानुषङ्गेण व्याख्येयम्। संज्ञा विपुलेति निरुपपदैव। अत्र प्रतिपादं षण्णवति भेदाः। तेषां परस्परहतौ सङ्ख्या अष्टौ कोटय एकोनपञ्चाशल्लक्षाः चतुस्त्रिंशत् सहस्राणि षट्शतो षट् पञ्चाशच्च। अङ्कतोऽपि ८४९३४६५६॥

भेनाब्धितो भाद्विपुला ॥ २७ ॥ इति।

अब्धितश्चतुरक्षरात् परेण भेन भगणेन भाद् भइत्यक्षरात् परा विपुला भविपुलेत्यर्थः। केचिदत्राखिलेष्वपि इतयनुवर्तयन्ति। वृत्तिकृतस्तु "भ्नौ न्तौ च" इति सूत्रे 'सर्वतः सैतवस्येति निवृत्तम्। चपलाऽयुजो नितरस्माद्युग्ग्रहणमनुवर्तते' इति वदन्तो विषमपादविषया एव भविपुला इत्याहुः।

इत्थमन्या रश्चतुर्थात् ॥ २८ ॥ इति।

चतुर्थाक्षरात् परतश्चेद् रगणस्तदेत्यमन्या यथा भाद् विपुला तथा रा-दिति रविपुलेत्यर्थः।

नोऽब्धुधेश्च नविपुला ॥ २८ ॥ इति।

अब्धुधेश्चतुर्थात् नो नगणश्चेत् तदा नपूर्वान्या विपुला नविपुलेत्यर्थः। एवं मयाभ्यां तत्पूर्वे विपुले भवतः। अत्रैतासु चतसृषु पादचतुष्केऽपि तत्तल्लक्षणयोगस्य ये सत्वमाहुस्तेषां मते न यत्रैकस्मिन् द्वयोर्वा तत्तल्लक्षणयोगस्तत्रासां परस्परसंसर्गेणानेत्र भेदा ज्ञेयाः। इत्तिकन्मते तु विषमपादयोरेतल्लक्षणयोगः, अन्ययोस्तु सप्तमस्य लघुत्वमात्रम्। यत्र तु चतुर्ष्वपि पादेषु भादियोगः तस्यानुष्टुभ्यमेव न तु वक्त्रत्वमिति विवेकः। तत्राप्ययुक्पादस्य जातिपरत्वे द्वयोरप्ययुजोर्भगणादियोगः, व्यक्तिपरत्वे त्वन्यतराङ्गीकारेणापि लक्षणार्थं तद्विरोधे तृतीये वा भगणादियोगः। जातिपक्षे भविपुलोदाहरणं, इयं सखे चन्द्रमुखी स्मितज्योत्स्ना च मानिनी। इन्दीवराक्षी हृदयं दहतीति तथापि मे॥ आद्ये भविपुलोदाहरणं, उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता। समौ हि शिष्टैराम्नातौ वत्स्यन्तावामयः स च॥ तृतीये, प्रोल्लसत्कुण्डलप्रोतपद्मरागदलत्विषा। कृष्णोत्तरासङ्गरुचं विदधच्चौतपल्लवीम्॥ रेफविपुलायाः क्रमेणोदाहरणानि, सकारनानारकासकायसाददसायका। रसाहवा वाहसारनादवाददवादना॥ महाकविं कालिदासं वन्दे वाग्देवतागुरुम्। यज्ज्ञाने विश्वमाभाति दर्पणे प्रतिबिम्बवत्॥ कामिनीभिः सह प्रीतिः कस्मै नाम न रोचते। यदि न स्याद्वारिवीचिचञ्चलं हन्त जीवितम्॥ नविपुलोदाहरणानि क्रमेण, युयुत्सुनेव कवचं किमामुक्तमिदं त्वया। तपस्विनो हि वसते केवलाजिनवल्कले॥ अथानाथाः प्रकृतयो मातृबन्धुनिवासिनम्। मौलैरानाययामासु र्भरतं स्तम्भिताश्रुभिः॥ तव मन्ये हतो मन्ये दूरात्संश्रमितारिभिः। प्रत्यादिश्यन्त इव मे दृष्टलक्ष्यभिदः शराः॥ तत्र तविपुलोदाहरणानि, सा वैदुष्य प्रौढिर्यदि सर्वशास्त्रविशारदा। सानुगामिनी विस्मेरा यस्योक्तौ पण्डिताः परे॥ लोकवत् प्रतिपत्तव्यो लौकिकोऽर्थः परीक्षकैः। लोकव्यवहारं प्रति

सदृशौ बालपण्डितौ॥ सविपुलोदाहरणानि, सखा गरीयान् शत्रुश्च कृत्रिमस्तौ हि कार्यतः। स्यातामभित्रौ मित्रे च सहजप्राकृतावपि॥ यियक्षमाणेनाहूतः पार्थेनाथ द्विषन्मुरम्। अभिचैद्यं प्रतिष्ठासुरासीत् कार्यद्वयाकुलः॥ षड्गुणाः शक्तयस्तिस्रः सिद्धयश्चोदयास्त्रयः। ग्रन्थानधीत्य व्याकर्तुमिति दुर्मेधसोऽप्यलम्॥ यविपुलोदाहरणानि, ततः कुमुदनाथेन कामिनीगण्डपाण्डुना। नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलङ्कृता॥ तथापि यन्मय्यपि ते गुरुरित्यस्ति गौरवम्। तत् प्रयोजककर्तृत्वमुपैति मम जल्पतः॥ एवं जविपुलाप्युदाहार्या। तत्र तु समपादयोश्चतुर्थादूर्ध्वं जगणेन पथ्यावक्त्रता सप्तमस्य लघुतामात्रत्वे जविपुलात्वमिति विवेकः। भविपुला तु कविप्रयोगाभावान्नास्ति। अन्येषां तु मते युयुत्सुनैवेत्यादीनां विषमयोश्चपलादित्वात् समयोस्तु पथ्यात्वाच्चपलापथ्यावक्त्रादि संज्ञा भवन्ति। एवं विपुलापथ्येत्यादिसंज्ञा ज्ञेयाः। अत्र वृत्तिकृन्मते सर्वासु भविपुलादिषु विषमपादयोः प्रत्येकं चतुर्विंशति भेदाः, समयोः प्रत्येकं षण्णवतिः। परस्परवृत्तौ युग्मविपुलावत् सङ्ख्या ज्ञेया। अन्येषां मते तु मुखवक्त्रवत्संख्या। तथा संकीर्णत एषां संकीर्णविपुलावक्त्रं भवति। भारवेः, क्वचित् काले प्रसरता क्वचिदापत्य निम्नता। शुनेव सारङ्गकुलं त्वया भिन्नं द्विषां कुलम्॥ कुमारे, यदध्यक्षेण जगतां वयमारोपितास्त्वया। मनोरथस्याप्यपथं मनोविषयमात्मनः॥ माघे, भवद्गिरामवसरप्रदानाय वचांसि नः। पूर्वरङ्गप्रसङ्गाय नाटकीयस्य वस्तुनः॥ इत्यादयो विपुलाभेदा अनन्ता एव कविप्रयोगेषु द्रष्टव्याः। सर्वेषु तु प्रायेण चतुर्थवर्णस्य गुरुतेति साम्प्रदायिकाः॥

इतिश्रीनारायणभट्टविरचितायां वृत्तरत्नाकरटीकायां वक्त्रप्रकरणम्॥

---

अथ मात्रासमान्याह॥ द्विगुणितवसुलघुरचलधृतिरिति च॥ ३१॥ इति।

वर्णच्छन्दोऽपेयतद्, द्विगुणितवसुपदस्योत्तरानुवृत्तिसिध्यर्थं प्रकीर्णकेष्वभ्यधायि। तेन मात्रासमकादिषु षोड़शमात्रत्वमधिकृतं भवति। द्विगुणवसुलघुः

द्वावष्टौ लघवो यस्यां सा अचलधृतिरिति कथ्यते। चकाराद् गीत्यार्येति संज्ञा भवति इति पिङ्गलमतसंग्रहः। षोडश लघुपादेत्यर्थः।

मात्रासमकं नवमो ल् गान्तम् ॥ ३२ ॥ इति।

यत्र पादे नवमो लघुरेव गुरुश्चान्तनियतस्तन्मात्रासमकसंज्ञम्। नवमान्त्ययोर्लघुगुरुनियमाच्छेषे नियमाभावः सूचितः। सर्वथा षोडशमात्रता कार्येति भावः। सर्वेषु मात्रासमेषु सममात्रा परमात्रया युक्ता न कार्येत्यपि सम्प्रदायः। ततश्च प्रथमे जगणाभावाच्चत्वारो गणविकल्पाः॥ यथा ऽऽ, ।।ऽ, ऽ।।, ।।।।, द्वितीये त्रयः ऽऽ, ऽ।।, ।।ऽ, मध्यगुरुसर्वलघू विश्लोकस्य दृष्टत्वान्न भवतः। तृतीये एकः ।।ऽ, नवमो लिति वचनादादिगुरु र्भवति। मध्यगुरुसर्वलघू तु वासिकालक्षणस्पृष्टत्वान्न भवतः। चतुर्थे द्वौ ऽऽ, ।।ऽ, गन्तत्वाभिधानादन्ये गणा न भवन्ति। एतेषां विकल्पानामन्योन्यघाते प्रतिचरणं चतुर्विंशति भेदाः। चतुर्णां चतुर्विंशत्यङ्कानामन्योन्यहतौ वक्ष्यवदेव जाता सङ्ख्या लक्षत्रयम् एकत्रिंशत्सहस्रौ षट्सप्तत्यधिकसप्तशतौ चेति।

जो ल्नावथाम्बुधे विश्लोकः ॥ ३३ ॥ इति।

अथेत्यथवेतत्पर्यं अम्बुधेः कलाचतुष्टयादूर्ध्वं जगणोऽथवा लौ चतुर्लघु र्वा गणः स्याच्छेषं पूर्ववत् स विश्लोको नाम मात्रासमकम्। यद्यपि विश्लोकः पञ्चमाष्टमाविति सूत्रे पञ्चमाष्टममात्रयोर्लघुत्वमात्रमुक्तं तथापि पञ्चमाष्टमयोर्लघुता चतुर्थमात्रानन्तरं जगणचतुर्लघ्वोरेव भवति नान्यथेत्यभिप्रायेणैवमूचिवान्। जपक्षे इदमेवोदाहरणं लपक्षे तु 'सेव्योरघुपतिरामहितार्थम्'। अत्राद्यगणे विकल्पाश्चत्वारः यथा ऽऽ, ।।, ऽ।।, ।।।।, द्वितीये द्वौ ।ऽ।, ।।।। तृतीयेऽपि द्वौ ऽऽ, ऽ।। मध्यगुर्वन्तगुरुसर्वलघुरूपं भेदत्रयं तु मात्रासम चित्रापादकत्वान्न भवति। चतुर्थे गुर्वन्तगणद्वयं ऽऽ. एतेषां परस्परघाते द्वात्रिंशत् सन्ति पादभेदाः। एतेषां घाते जाता सङ्ख्या दश लक्षाः अष्टाचत्वारिंशत् सहस्राणि पञ्च शतानि षट्सप्ततिः। अङ्कतोऽपि १०४८५७६।

तद्युगलाद्वानवासिका स्यात् ॥ ३४ ॥ इति।

तद्युगलाद्व्धियुगलादष्टमात्रानन्तरं यदि जो न्लौ वा स्यात् सा वानवासिकेति। जोन्लावथेति पदत्रयमनुषज्य योज्यम्। अत्रापि'द्वादशश्च वानवासिका' इति सूत्रे द्वादश चकारलभ्यनवमयो र्लघुतोक्ता सा चैवमेव नान्यथेतेत्यवमुक्तम्। जपच्च इदमुदाहरणम्। लपच्चे यथा। 'लोकहितार्थं हरिहरमूर्तौ' अत्रादेय गणे विकल्पाश्चत्वारः ऽऽ, ।।ऽ, ऽ।।, ।।।।. ॥ द्वितीये त्रयः ऽऽ, ऽ।।, ।।ऽ. तृतीये द्वौ ।ऽ।, ।।।।. चतुर्थेऽपि द्वौ ऽऽ, ।।ऽ. एतेषामन्योन्यताड़ने भेदाः प्रतिपादम् अष्टाचत्वारिंशत्। अन्योन्यहतौ जाता सङ्ख्या त्रिपञ्चाशल्लक्षाः अष्टौ सहस्राणि चत्वारि शतानि षोड़श च। अङ्कतोऽपि ५३०८४१६।

वाणाष्टनवसु यदि लश्चित्रा ॥ ३५। इति॥

वाणाः पञ्च पञ्चमाष्टनवसु यदि लघुः स्यात् शेषं पूर्ववत् तदा चित्रा नाम। अस्यामाद्ये गणे चत्वारो विकल्पाः पूर्ववत्। द्वितीयेऽपि द्वौ ।ऽ।, ।।।।. तृतीये त्रयः ।।ऽ, ।ऽ।, ।।।।. चतुर्थे द्वौ ऽऽ, ।।ऽ. अन्योन्यघाते प्रतिपादं भेदसंख्या अष्टाचत्वारिंशत्। अन्योन्यगुणने पूर्ववं संख्या॥

उपचित्रा नवमे परयुक्ते ॥ ३६ ॥ इति।

नवमे मात्रास्वरूपे दशमेन परेण युक्ते सति मिलिते सति उपचित्रा नाम शेषं प्राग्वत्। जयदेवस्त्वेकादशद्वादशादिमात्रास्वपि नियममाह 'अष्टभ्यो गो ल्यावुपचित्रेति' अष्टकलानन्तरं गुरुलघुयगणा इत्यर्थः। अत्र तृतीयगणे द्वौ विकल्पौ ऽऽ, ऽ।।. अन्ये गणविकल्पा मात्रासमकवत्। अन्योन्यघाते प्रतिपादं भेदा अष्टाचत्वारिंशत् अन्योन्यघाते संख्या प्राग्वत्।

यदतीतकृतविविधलक्ष्मयुतैर्मात्रासमादिपादैः कलितम्।
अनियतवृत्तपरिमाणयुक्तं प्रथितं जगत्सु पादाकुलकम्॥ ३७ ॥इति।

अतीतानि पूर्वोक्तानि कृतानि विविधानि नानाप्रकाराणि यानि लक्ष्माणि लक्षणानि तद्युक्तैः मात्रासमादीनां पञ्चानां पादैः कलितं रचितं तथाऽनियतवृत्तपादचतुष्केऽपि नियतैकवृत्तलक्षणहीनं परिमाणे च

षोडशमात्रपादत्वेन युक्तं ततः कर्मधारयः एतादृशं यद्वृत्तं तत् पादाकुलकमिति अन्वर्थसंज्ञा ज्ञेयेति तच्छब्दाध्याहारेण योजनम्। अथ प्रथम पादे मात्रासमकविश्लोकचित्राणां लक्षणयोगः, विश्लोकोपचित्रयो द्वितीये, मात्रासमवासिकयोस्तृतीये, उपचित्राविश्लोकयोश्चतुष्कयोर्द्विश्चतुर्थे इति। इदं च प्रतिपादमनेकलक्षणयोगं मत्वोदाहरणं मन्तव्यम्। अन्ये तु प्रतिपादमेकलक्षणयोगं वदन्तः समुदितेषु विविधलक्षणयोगाभिप्रायेणेदं व्याचक्षते। वयं तूभयथा व्याख्याने दोषाभावं वदामः॥ अतएव मात्रासमकादिप्रकृत्या एभिः पादाकुलकमिति सूत्रकारः सामान्यत एवाह। तथा मात्रासमकविश्लोकवानवासिकोपचित्राणामसंकीर्णं यावदुदाहरणं चाह इतिकृत् यथा, 'अलिवाचालितविकसितचूते काले मदनसमागमदूते। स्मृत्वा कान्तापरिहृतसार्थः पादाकुलकं धावति पान्थः' इति। संकीर्णोदाहरणं तु मूल एव। तेनोभयथापि न दोषः। अत्र पञ्चानां मात्रासमकादीनां परस्परसंकरे अनन्ता एव भेदाः॥ तत्र यथा द्वयोर्द्वयोः सङ्करे चत्वारिंशदधिकं शतं भेदा भवन्ति। तद्यथा

| | | | |
|---|---|---|---|
| १ | २ | ३ | ४ |
| २ | ३ | ४ | ५ |

अत्रैककोष्ठस्थाङ्कद्वयसंज्ञाङ्कः वृत्तद्वयस्य सङ्करे वक्ष्यमाणोपजातिप्रस्तारमार्गेण चतुर्दश चतुर्दश प्रतिकोष्ठं भेदा भवन्ति। एवं च प्रथमद्वितीययोः प्रथमतृतीययोः प्रथमचतुर्थयोः प्रथमपञ्चमयोः संकरे चत्वारश्चतुर्दशका मिलिताः षट्पञ्चाशद्भवन्ति ५६॥ तथा द्वितीयतृतीयद्वितीयचतुर्थद्वितीयपञ्चमानां संकरे द्विचत्वारिंशत् ४२॥ तथा तृतीयचतुर्थतृतीयपञ्चमानां सङ्करे अष्टाविंशतिः २८। तथा चतुर्थपञ्चमयोः संकरे चतुर्दशेति। सर्वेषां मेलने शतमेकं चत्वारिंशच्च १४०॥ एवं त्रयाणां चतुर्णां संकरेऽपूह्याः॥ एतेषामुदाहरणानि ऊह्यानि। विस्तरभयान्न नोच्यन्ते। अत्राचलधृत्यादीनां सर्वेषां षोडशमात्रपदत्वेन समत्वान्मात्रासमकसंज्ञा। अथोक्तानां वक्ष्यमाणानां च वृत्तानां गुरुलघुमात्रावर्णं यथापरिज्ञानोपायमाह।

वृत्तस्य ला विना वर्णैर्गा वर्णा गुरुभिस्तथा।
गुरवो लै दले नित्यं प्रमाणमिति निश्चितम्॥ ३८॥ इति।

वृत्तस्य ला मात्रा वर्णैर्विना गा गुरवो ज्ञेया इत्यध्याहारः। ला वर्णा गा इत्यादिभिः शब्दैस्तत्तत्संख्या लक्ष्यते। ततश्चायमर्थः यदि वृत्तस्य मात्रावर्णयोः सङ्ख्या विज्ञाता गुरुलघुसङ्ख्या चाज्ञाता तदा मात्रासङ्ख्यामपनीयावशिष्टा गुरुसङ्ख्या ज्ञेयेति, वर्णसङ्ख्यामध्ये च ज्ञाता गुरुसङ्ख्यामपनीयावशिष्टा लघुसङ्ख्या ज्ञेयेत्याशयः। यदि तु मात्राणां गुरूणां च ज्ञातसङ्ख्यत्वं वर्णाश्चाज्ञातसङ्ख्यास्तदा तज्ज्ञानोपायमाह वर्णा इति। तथा वृत्तमात्रागुरुभिर्विना वर्णा ज्ञेयाः वृत्तमात्रासङ्ख्यायां गुरुसंख्या मपनीयावशिष्टा वर्णसंख्येत्यर्थः। वृत्तमात्रालघुसङ्ख्याया गुरुलघुसंज्ञाने सति गुरुज्ञाने प्रकारान्तरमाह गुरव इति। वृत्तस्य ला इत्यनुषङ्गः। वृत्तस्य मात्रा लैर्लघुभिर्विना दले ऽर्धे कृते गुरवः ज्ञेयाः। वृत्तमात्रासङ्ख्यायां लघुसङ्ख्यामपनीयावशिष्टां सङ्ख्याम् अर्धीकृत्य तावत्प्रमाणा गुरुसंख्येत्यर्थः। उक्तां गुर्वादिसङ्ख्यामुपहरति नित्यमिति। इत्यमुना प्रकारेण प्रमाणं गुर्वादीनां नित्यं सर्वदा निश्चितं भवतीति शेषः। वृत्तस्येत्युपलक्षणं गद्यादावपि सम्भवात्। अत्र च गुरुवर्णसङ्ख्याज्ञानोपायप्रदर्शनमुपलक्षणार्थम्। तथा हि मात्रावर्णगुरुलघुचतुष्टयात्मके वृत्ते द्वयोर्द्वयोरियत्तापरिच्छेदेऽन्ययोः सङ्ख्यापरिच्छित्तिः, तद्यथा मात्रावर्णयोरियत्तापरिच्छेदेऽन्ययोः सङ्ख्यापरिच्छित्तिः। तद्यथा, मात्रावर्णयोर्मात्रालघ्वोर्वर्णगुर्वोर्वर्णलघ्वोर्मात्रागुर्वोर्गुरुलघ्वोश्च षट्सु द्विकेषु एकैकद्विकज्ञाते परे द्विकमुक्तया दिशा ज्ञेयमिति। इदं सर्वमुदाहरणे योज्यते। 'वागर्थाविव संपृक्तौ' इत्यत्र चतुर्दशमात्रासु अष्टरूपां वर्णसङ्ख्यामपनीयावशिष्टाः षड् गुरवः वर्णसङ्ख्या, पूरकौ च द्वौ लघू। एवं षड्रूपां गुरुसङ्ख्यामपनीयावशिष्टा वर्णा अष्टौ, गुरूणां षट्त्वादवशिष्टौ द्वौ लघू। एवं लघुद्वयमपनीयावशिष्टद्वादशसङ्ख्यायामर्धितायां षट् सङ्ख्या गुरवः, गुरुभिर्द्वादशमात्रासिद्धेश्चतुर्दशमात्रासिद्ध्यर्थं द्वौ लघू इति। एवं वर्णगुरुज्ञाने वर्णलघुज्ञाने गुरुलघुज्ञाने चेतरद्वयज्ञानं योज्यं। एवं सर्वेषु गद्यपद्येषु।

इति श्रीनारायणभट्टविरचितायां वृत्तरत्नाकरटीकायां मात्रासप्तप्रकरणम्॥

मात्रानियमघटितत्वान्मात्राछन्दःप्रसङ्गेन द्विखण्डकान्याह ।

शिखिगुणितदशलघुरचितमपगतलघुयुगलमपरमिदमखिलम् ।

सगुरु शकलयुगलकमपि सुपरिघटितललितपदविततिं भवति शिखा ॥३९॥

इति ।

गार्हपत्याहवनीयदक्षिणाग्नयस्त्रयोऽग्नयः । तैस्त्रिधाख्या तत्संख्या लक्ष्यते । तेन शिखिभिर्गुणितास्त्रिगुणीकृता ये दश लघवस्तै रचितमेव शकलमित्य-ध्याहारः, अपरमित्यभिधानात् । तच्चापगतं न्यूनं लघुद्वयं यस्मात् तादृक् कार्यं । अपरं द्वितीयं शकलमित्यर्थः इदं पूर्वोक्तमखिलं समग्रं लघुना न्यूनं त्रिंशल्लघुकं भवति । शकलयुगलकमर्धद्वयमपि सगुरु अन्तेऽधिकैकगुरुयुक्तं सुष्ठु परिघटिता रचिता ललिता पदविततिः पदरचना यत्र तादृशं भवति शकलं युगलं यस्यां सा शिखेति यच्छन्दोऽध्याहारेणार्थः । अयं भावः पूर्वार्धे अष्टा-विंशतिर्लघवः एको गुरुरिति एकोनत्रिंशदक्षराणि, उत्तरार्धे त्रिंशल्लघवः एको गुरुरिति एकत्रिंशदक्षराणि यत्र सा शिखेति । सुपरिघटितेति पदेन श्रुति-सुखकर्त्री यतिः कार्येति सूचयति ।

विनिमयविनिहितशकलयुगलकलितपदविततिविरचितगुणनिचया ।

श्रुतिसुखकृदियमपि जगति जि जशिर उपगतवति सति भवति खजा ॥

४० ॥ इति ।

इयमेव शिखा यदि विनिमयेन व्यत्यासेन विहितं निवेशितं यच्छकलयुगलं तेन कलिता घटिता पदसमुदायकृतसौकुमार्यादिगुणसमु-दायवती च कलितान्तस्य पदादिना कर्मधारयः श्रुतिसुखकारिणी चेति पूर्ववद्यतिः कार्येति सूचितम् । जि जकारे जशिर इति जकारप्राशदाहरणं प्राप्ते सति खजा भवन्ति खञ्जेति यावत् । गुरुद्वयस्य छन्दसि प्रवेशयितुम-शक्यत्वादुक्तिप्रकारोऽयम् । विनिमयविनिहितशकलयुगलकलितपदवितति-रचितगुणनिचयेति युगलान्तस्य लघितत्रादिना कर्मधारयः । यद्यपि सूत्र-कारेणार्धे इत्यधिकृत्य 'शिखैकोनत्रिंशदेकत्रिंशदन्ते ग्' इति 'खञ्जा महत्य-युजीति' च वदता पूर्वोक्तनियमवदेकोनत्रिंशदक्षरैकत्रिंशदक्षररचितक्रम-

लघुक्रमवत् पादद्वयघटितार्थं इयवतयो विंशतयधिकशताक्षरैः शिखाखञ्जे उक्ते अत्र षष्ट्यक्षरे एवेति विरोधस्तथापि ग्रन्थान्तरपर्यालोचनया एवमुक्तिः। यद्वा सूत्रकारोक्तिशिखाखञ्जाभ्यामेते अन्ये एव सूत्रानुक्ते एव प्रोक्ते। सूत्रोक्ते तु चतुर्थाध्यायेऽर्धसमत्वात् स्वयमूह्येत्। अथवोभयत्रापि शकलशब्दो अवयववचनत्वात् पादरूपावयवपरो कृत्वा मूलोदाहरणे च अर्धविषये मत्वार्धसमत्वेऽपि च मात्रानियमात्मकत्वान्मात्रावृत्तप्रकारेणोक्तिं समाधाय सूत्रानुसारः कार्य इति सर्वमूह्यम्।

अष्टावर्धे गा इयभ्यस्ता यस्याः सानङ्गक्रीड़ोक्ता।
दलमपरमपि वसुगुणितसलिलनिधिलघु कविरचितपदविततिभवति॥ ४१॥ इति।

यस्य अर्धेऽष्टौ गा गुरवो इयभ्यस्ता द्विगुणाः षोड़शेत्यर्थः। अपीति चार्थः। अपरञ्च दलं द्वितीयमपि वसवोऽष्टौ तैर्गुणिताः सलिलनिधिलघवश्चत्वारो लघवो द्वात्रिंशद्यत्र तत्तादृक् कविना रचिता पदानां विततिर्विस्तरो यत्र तदा भवति सा अनङ्गक्रीड़ेति संज्ञयोक्ता वृत्तज्ञैः। पूर्वार्धे षोड़श गुरवः उत्तरार्धे द्वात्रिंशल्लघवः कार्या इति तात्पर्यार्थः। कवीतयादिना श्रुतिसुखा यति र्भवतीतयसूसुचत्। पैङ्गले त्वियं सौमेयति संज्ञितम्। इयमेव व्यतयस्तार्धतायां जयोतिराख्या भवति। उदाहरणं तु, 'यदि सुखमनुपममपरमभिलषसि परिहर युवतिषु रतिमतिशयमिह। आत्मजयोति र्योगाभ्यासात् दृष्ट्वा दुःखच्छेदं कुर्याः॥' अनयो र्द्वयोः शिखेति सामान्यसंज्ञा पैङ्गल उक्ता।

त्रिगुणनवलघुरवसितिगुरुरिति दलयुगलकृततनु रतिरुचिरा॥४२॥ इति।

त्रिगुणा नव लघवो यत्र सप्तविंशतिरितयर्थः अवसिताववसाने गुरुर्यस्याः सा तथा इतयमुना प्रकारेणार्धद्वयरचितशरीराति रुचिरा संज्ञा। पैङ्गले त्वियं चूलिकेतयुक्ता। अर्धसमत्वेऽपि अस्य मात्रामात्रघटितत्वादत्रोक्तिः। "चूलिकैकोनत्रिंशदन्ते ग्" इति सूत्रपाठपक्षेणैवमुक्तम्। "चूलि-

कार्धमेकोनत्रिंशदेकत्रिंशदन्ते ग्" इति पाठे तु प्रथमं द्वितीयं चार्धं क्रमेणैकोनत्रिंशदेकत्रिंशन्मात्रं भवति, अन्ते च मात्राद्वयस्थाने गुरुरेकः स्यात् सा चूलिकेति सूत्रार्थः। अस्मिन् पक्षे मूलानुक्तमुदाहरणं ममैव, रघुकुलनलिनविकसनशशभृति दशमुखरिपुकुलतिमिरहरे। विषधर-विषमविषयविषहरमहसि कुरु रतिमिह दशरथतनये॥ अत्र सूत्रेऽर्धग्रहणात् पादनियमो नास्ति। इह चावसितिगुरुरिति पदेन गुरावेवावसानं नान्यत्रेति सूचितम्।

इति श्रीमद्भट्टरामेश्वरसूनुनारायणभट्टविरचितायां वृत्तरत्नाकरव्याख्यायां मात्रावृत्ताधिकारो नाम द्वितीयोऽध्यायः॥

---

एवं मात्रावृत्तान्यभिधायाधुना वर्णवृत्तेषु सुवृत्तानि कीर्तय इति उक्ता इति। अधिक्रियत इति शेषः, सप्तम्यन्तपाठे तु भेदा अभिधीयन्त इति। एवमत्युक्तादिष्वपि व्याख्येयम्।

गः श्रीः॥ १॥ इति।

एकाक्षरपादायामुक्तायां गुरुरेकश्चेत् पादः श्रीर्नाम। लक्ष्यलक्षणयोरेकाक्षरेण पादेनासंग्रहादर्धोदाहरणमेतत्। नोक्ता उक्तादिभेदा ये ग्रन्थगौरवभीतितः। तांस्तथा शब्दचिह्नेन वदामोऽन्यत्रदर्शनात्॥ यथा, अस्मिन् पिटक्ते नवेत्र कावेत्र रामकुतूहले। उक्ता उक्तादयो व्यस्ता विवेक्तव्याः सुयुक्तिभिः॥ अत्र वक्ष्यमाणसंख्याख्यानप्रकारेण वृत्तभेदः २। न च सुप्रतिष्ठान्तानां पञ्चानां जातीनां सूत्रानुक्तत्वान्निर्मूलतेति वाच्यम्। "द्विको ग्लौ" इति प्रस्तारकथने, 'परे पूर्णमिति' रूपप्रस्तारकथने च सूत्रकारेणापि दर्शितत्वात्। बहुतरप्रचाराभावात्तु गाथाभेदवल्लक्षणानुक्तेति निरूपयति।

अथात्युक्ता॥ गौ स्त्री॥ २॥ इति।

द्वौ गुरू यदि पादे तस्तदा स्त्री नाम। अत्र वृत्तसंख्या ४।

अथ मध्या, ३॥ मो नारी॥ ३॥ इति।

मो मगणश्चेत् पादस्तदा नारी नाम।

रो मृगी ॥ ४ ॥ इति।

रगणश्चेत् पादस्तदा मृगी ॥ अत्र संख्या ८।

अथ प्रतिष्ठा ४ ॥ म्गौ चेत् कन्या ॥ ५ ॥ इति।

म्गौ मगणगुरू चेत् पादश्चतुर्गुरुरित्यर्थस्तदा कन्या ॥ अत्र संख्या १६।

अथ सुप्रतिष्ठा ५ ॥ भ्गौ गिति पंक्तिः ॥ ६ ॥ इति।

भगणगुरू पुनर्गुरुश्चेतेत्रं पंक्तिः ॥ संख्या ३२।

अथ गायत्री ६ ॥ त्यौ स्तनुमध्या ॥ ७ ॥ इति।

त्यौ तगणयगणौ यदि स्तो भवतस्तनुमध्येति। यदि तदेतत्रध्याहार्यम्।

शशिवदना न्यौ ॥ ८ ॥ इति।

नगणयगणौ यदि पादस्तदाशशिवदना नाम।

विद्युल्लेखा मो मः ॥ ९ ॥ इति।

मगणौ चेत् पादस्तदा विद्युल्लेखा नाम।

त्सौ चेद् वसुमती ॥ १० ॥ इति।

तगणसगणौ चेत् पादस्तदा वसुमती। गायत्र्यन्तेषु सर्वेषु पादेषु पादान्त एव यतिरितत्राम्नायः ॥ तत्र संख्या ६४।

अथोष्णिक् ७ ॥ म्सौ गः स्यान् मदलेखा ॥ ११ ॥ इति।

मगणसगणगुरुभि र्मदलेखा नाम।

तथा, सरगै र्हंसमाला ॥

* मधुमति ननगाः ॥ * "नमगि मधुमती," A.

कुमारललिता ज्सौ ग् ॥

चूड़ामणिस्तभगात् ॥

अत्र द्वाभ्यां पञ्चभिश्च यतिमाहुः केचित्। अन्ये तु पादान्त एव। अत्र संख्या १२८ ॥

अथानुष्टुप् ८ ॥ भौ गिति चित्रपदा गः ॥ १२ ॥ इति।

भगणौ गुरू च यत्र पादे इतेत्रवं सा चित्रपदा। पादे यतिः।

मो मो गो गो विद्युन्माला ॥ १३ ॥ इति।

मगणौ द्वौ च गुरू विद्युन्मालेति। चतुर्भिश्चतुर्भिश्च यतिरिति सम्प्रदायः।

माणवकं भात्तलगाः॥ १४॥ इति।

भगणात् तगणलघुगुरवो यदि तदा माणवकम्। माणवकक्रीडितकमिति पैङ्गले संज्ञा। पूर्ववद्यतिः॥

म्नौ गौ हंसरुतमेतत्॥ १५॥ इति।

मगणनगणौ गुरू च द्वावेतत् हंसरुतं नाम।

र्जौ समानिका गलौ च॥ १६॥ इति।

रेफजकारौ गुरुलघू च समानिका नाम।

प्रमाणिका जरौ लगौ॥ १७॥ इति।

जगणरेफौ लघुगुरू च प्रमाणिका। समान्येव समानिका प्रमाण्येव प्रमाणिका स्वार्थे कश्छन्दोऽनुरोधात्॥

वितानमाभ्यां यदन्यत्॥ १८॥ इति।

आभ्यां समानीप्रमाणीभ्यामन्यद् यदनुष्टुब्जातीयं छन्दो वितानसंज्ञम्। आभ्यामन्यदिति उक्तं लक्ष्यलक्षणम्। केचित्तु समानिकायां गुरुलघुक्रमेण समाप्तिः, प्रमाणिकायां लघुगुरुक्रमेण, विताने तु द्वौ गुरू द्वौ लघू, द्वौ लघू द्वौ गुरू वा, द्वौ गुरू एको लघुः पुनरेको गुरुरिति वा, द्वौ लघू एको गुरुरेको लघुरिति वा, इत्थं वा नियम इत्याहुः॥ तत्र द्वौ गुरू द्वौ लघू इतत्रत्रोदाहरणम्, तृष्णां त्यज धर्मं भज पापे हृदयं मा कुरु। इष्टा यदि लक्ष्मीस्तव शिष्टाननिशं संश्रय॥ द्वौ लघू द्वौ गुरू इत्यत्रोदाहरणं, हृदयं यस्य विशालं गगनाभोगसमानम्। लभतेऽसौ मणिचित्रं नृपति मूर्ध्नि वितानम्॥ एवमन्यत्राप्युदाहार्यम्। वयं तु गृह्णीम एतत् एतेषां वितानतेति न तु नियमम्। अतएवोक्तनियमातिक्रमेणैवोदाहरणं मूले। सूत्रमपि "वितानमन्यत्" इति सामान्यत एव, न तु नियमं कश्चिदाह। वृत्तिकृदपि "सूत्रकारो वितानस्यानेकप्रकारतां दर्शयति" इति वदन्ननेकमात्रतामाह, न तु नियममिति।

तथा॥ नाराचिका तरौ लगौ॥ अत्र सङ्ख्या २५६॥

अथ वृहती॥ रान्नसाविह हलमुखी॥ १९॥ इति।

रगणानन्तरं नगणसगणौ चेदिह छन्दःशास्त्रे हलमुखी नाम। त्रिभिः षड्भिश्च यतिरिति सम्प्रदायः।

भुजगशिशुभृता नौ मः॥ २०॥ इति।

द्वाभ्यां नगणाभ्यामेकेन च मगणेन भुजगशिशुभृता। सप्तभि र्द्वाभ्यां च यतिः॥

तथा, भद्रिकेति रनरै रियम्॥ वृत्तसंख्या ५१२॥

अथ पंक्तिः १०॥ म्सौ ज्गौ शुद्धविराड़िदं मतम्॥ २१॥ इति।

मगणसगणौ जगणगुरू च तत् शुद्धविराण्मतं छन्दोविदाम्। पादान्ते यतिः।

* म्नौ ज्गौ चेति पणवनामकम्॥ २२॥ इति। * "म्नौ य्गौ पणवनामेदम्।" A.

मगणनगणौ जगणगुरू चेति पणवनामकम्। पञ्चभिः पञ्चभिश्च यतिः॥

र्जौ रगौ मयूरसारिणी स्यात्॥ २३॥ इति।

रगणजगणरगणगुरुभि र्मयूरसारिणी। पादान्ते यतिः॥

भ्मौ सगयुक्तौ रुक्मवतीयम्॥ २४॥ इति।

भगणमगणौ सगणगुरुणा च रुक्मवती। * पञ्चकमालेत्यनेत्र। पादान्ते यतिः॥ * "चम्पकमाला" C.m.

मत्ता ज्ञेया मभसगयुक्ता॥ २५॥ इति।

मभसगणगुरुयुता मत्ता। चतुर्भिः षड्भिश्च यतिः॥

नरजगै र्भवेन्मनोरमा॥ २६॥ इति।

नरजगणगुरुभि र्मनोरमा। पादे यतिः॥

त्जौ जो गुरुणेयमुपस्थिता॥ २७॥ इति।

तजजगणगुरुभिः उपस्थिता नाम। पादे यतिः॥ द्वाभ्यामष्टभिश्चेतेत्रके। अत्र संख्या १०२४॥

अथ त्रिष्टुप् ११॥ स्यादिन्द्रवज्रा यदि तौ जगौ गः॥ २८॥ इति।

ततजगणाः गुरुभ्यां चेन्द्रवज्रा नाम। पादे यतिः॥

उपेन्द्रवज्रा जतजास्ततो गौ॥ २९॥ इति।

जतजगणाः गुरू चोपेन्द्रवज्रा नाम । पूर्वोक्तैव यतिः ॥

अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः ॥ ३० ॥

इति ।

अव्यवहितोक्तेन्द्रवज्रोपेन्द्रवज्रालक्षणवन्तौ पादौ यत्सम्बन्धिनौ ता उपजातयो नाम । अत्र पूर्वोक्तलक्षणपादद्वयेन यथायोगमेकद्विवारवृत्त्या निष्पत्ति र्विवक्षिता, न तु द्वाभ्यामेवं वृत्तपूर्तिः पादद्वयमात्रघटितस्य वृत्तस्याभावात् । द्विवचनं लक्षणद्वययोगेन लक्षणया नेयम् । ताश्चतुरक्षरप्रस्तारवत् प्रस्तारे सति आद्यन्तभेदयोः केवलेन्द्रवज्रोपेन्द्रवज्रात्वात् त्यागे चतुर्दश भवन्ति यथा,—इउउउ, उइउउ, इइउउ, इउइउ, उउइउ, उइइउ, इइइउ, उउउइ, इउउइ, उइउइ, इइउइ, उउइइ, इउइइ, उइइइ इति । तथा च वृद्धाः "एकत्र पादे चरणद्वये वा पादत्रये वान्यतरस्थितिश्चेत् । तयोरिहान्यत्र तदोदनीयाश्चतुर्दशोक्ता उपजातिभेदाः" इति । अत्राद्यभेदोदाहरणं "दैत्याधिपप्राणमुषां नखानामुपेयुषा भूषणतां क्षतेन । प्रकाशकार्कश्यगुणौ दधानाः स्तनौ तरुण्यः परिवव्रुरेनम्" ॥ मूलश्लोकस्तु षष्टभेदोदाहरणम् । एवमन्यभेदेष्वपुदाहरणानि काव्येषु च विवेचनीयानि ।

इत्थं किलान्यास्वपि मिश्रितासु स्मरन्ति जातिष्विदमेव नाम ॥ ३१ ॥

इति ।

अन्यास्वपि जगत्यादिजातिषु इत्थं सामान्यसङ्ख्याक्षरत्वसमानयतिकत्वादिप्रकारेण मिश्रितासु इदमेवोपजातिनाम वृद्धाः स्मरन्ति ग्रन्थान्तरेभ्यो ज्ञात्वा वदन्तीत्यर्थः । इत्थमित्यनेन विषमवर्णसंख्याकानां विषमयतिकानां च जातीनां त्र्यादीनां च मिश्रणे उपजाति र्नाम नास्तीति सूचितम् । स्मरन्तीत्यनेन च कविप्रयोगे दर्शनानुरोधः सूचितः । तत्रेन्द्रवंशावंशस्थाभ्यामुदाहरणम् । 'इत्थं रथाश्वेभनिषादिनां प्रगे गणो नृपाणामथ तोरणाद्बहिः । प्रस्थानकालक्षमवेषकल्पनाकृतक्षणक्षेपमुदैक्षताच्युतम्' ॥ एवमन्यत्र प्रयोगवशादुदाहरणं ज्ञेयम् । सर्वासामुपजातीनामुक्तया दिशा चतु-

दृशभेदा भवन्ति। विषमार्धसमरूपत्वेऽपुत्रपजातीनां समवृत्तेषूपन्यासः सम-वृत्तघटिततया प्रासङ्गिकः॥

नजजलगैर्गदिता सुमुखी॥ ३२॥ इति।

नजजैर्गवैर्लघुगुरुभ्यां च सुमुखी नाम। पञ्चभिः षड्भिश्च यतिः॥

दोधकवृत्तमिदं भभभाद्गौ॥ ३३॥ इति।

भगणत्रयाद् गुरुद्वयं चेद् दोधकं नाम। भभभादिति समाहारद्वन्द्वैकवद्भावः दोधकनामनि भत्रयतो गाविति वा पाठः। पादान्ते यतिः॥

शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः॥ ३४॥ इति।

मततैर्गुरुभ्यां च शालिनी। अब्धिभिश्चतुर्भिर्लोकैः सप्तभिश्च यतिरिति शेषः। एवमुत्तरत्रापि॥

वातोर्मीयं कथिता म्भौ तगौ गः॥ ३५॥ इति।

मभतगुगुरुभिर्वातोर्मी। इयमिति शालिन्युक्तयतिमतीत्यर्थः।

वाणरसैः स्याद् भतनगगैः श्रीः॥ ३६॥ इति।

भतनगगुरुभिः पञ्चभिः षड्भिश्च यतौ श्रीर्नाम॥

म्भौ न्लौ गः स्याद् भ्रमरविलसितम्॥ ३७॥ इति।

मभनलघुगुरुभिर्भ्रमरविलसितमिति। चतुर्भिः सप्तभिश्च यतिः॥

रान्नराविह रथोद्धता लगौ॥ ३८॥ इति।

रनरलगैरिह छन्दःशास्त्रे रथोद्धता। पादे यति॥

स्वागतेति रनभाद्गुरुयुग्मम्॥ ३९॥ इति।

रनभगणेभ्यः परं गुरुयुग्मं यदि तदा इतेत्रवं स्वागता। नरभादितेत्रकव-द्भावः पूर्ववद् यतिः॥

ननसगगुरुरचिता वृन्ता॥ ४०॥ इति।

ननसगगुरु वृन्ता नाम चतुर्भिः सप्तभिश्चयतिः॥

ननरलगुरुभिश्च भद्रिका॥ ४१॥ इति।

ननरलगैर्भद्रिका। पादे यतिः॥

श्येनिका रजौ रलौ गुरुर्यदा॥ ४२॥ इति।

स्पष्टम्। पादे यतिः॥

मौक्तिकमाला यदि भतनाग्गौ॥ ४३॥ इति।

भतनादितैत्रकवद्भावः। पञ्चसु षट्सु च यतिः॥

उपस्थितमिदं ज्सौ ताग्गकारौ॥ ४४॥ इति।

जसतगगैरुपस्थितम्। पादे यतिः॥

तथा, उपचित्रमिदं सससा लगौ॥

कुपुरुषजनिता ननौ गौं गः॥

अनवसिता न्यौं भ्गौ गु षड़न्ते॥ अत्र वृत्तानि २०४८॥

अथ जगती १२॥ चन्द्रवर्त्म निगदन्ति रनभसैः॥ ४५॥

रनभसैर्गणैश्चन्द्रवर्त्म। चतुर्भिरष्टभिश्च यतिः॥

जतौ तु वंशस्थमुदीरितं जरौ॥ ४६॥ इति।

जतजरैर्वंशस्थम्। पादे यतिः॥

स्यादिन्द्रवंशा ततजै रसंयुतैः॥ ४७॥ इति।

ततजैरसंयुतैः रगणसहितैः इन्द्रवंशा। पादे यतिः।

इह तोटकमम्बुधिसैः प्रथितम्॥ ४८॥ इति।

अम्बुधिसैश्चतुर्भिः सगणैः। पादे यतिः॥

द्रुतविलम्बितमाह नभौ भरौ॥ ४९॥ इति।

नभभरैर्द्रुतविलम्बितमाहाचार्यः। पूर्ववं पादे यतिः।

मुनिशरविरति र्नौ स्यौ पुटोऽयम्॥ ५०॥ इति।

मुनिभिः सप्तभिः शरैः पञ्चभिश्च विरति र्यत्र॥

प्रमुदितवदना भवेन्नौ च रौ॥ ५१॥ इति। स्पष्टम्।

नयसहितौ न्यौ कुसुमविचित्रा॥ ५२॥ इति।

स्पष्टम्। द्वयोरपि पादे यतिः।

रसै र्जसजसा जलोद्धतगतिः॥ ५३॥ इति।

रसाश्च रसाश्चैत्रकशेषे षड़्भिः षड़्भिश्च यतिः॥

चतुर्जगणं वद मौक्तिकदाम॥ ५४॥

भुजङ्गप्रयातं भवेद् यैश्चतुर्भिः ॥ ५५ ॥

रैश्चतुर्भि र्युता स्रग्विणी सम्मता ॥ ५६ ॥ [पादे यतिः।

भुवि भवेन्नभजरैः प्रियंवदा ॥ ५७ ॥ इति। त्रीणि स्पष्टानि।

त्यौ त्यौ मणिमाला छिन्ना गुहवक्त्रैः ॥ ५८ ॥ इति।

तयतयै र्मणिमाला, गुहस्य स्कन्दस्य वक्त्रैः षड्भिः षड्भिश्च छिन्ना यतिम-

धीरैरभाणि ललिता तभौ जरौ ॥ ५९ ॥ इति। [तीत्यर्थः।

प्रमिताक्षरा सजससैरुदिता ॥ ६० ॥ इति। एते स्पष्टे। पादे यतिः।

ननभरसहिता महितोज्ज्वला ॥ ६१ ॥ इति।

महिता पूजिता श्रेष्ठेत्यर्थः उज्ज्वलेति नाम। पादे यतिः।

पञ्चाश्वैश्छिन्ना वैश्वदेवी ममौ यौ ॥ ६२ ॥ इति।

पञ्चभिः अश्वैः सप्तभिश्छिन्ना यतिमती वैश्वदेवी नाम।

अब्ध्यष्टाभि र्जलधरमाला म्भौ स्मौ ॥ ६३ ॥ इति।

अब्धिभिः चतुर्भिः अष्टाभिश्च पादयतिः। मगणभगणौ सगणमगणौ च भवतः तत् जलधरमाला नाम। चतुर्भिरष्टभिश्छिन्ना इति अनुषङ्गः। पैङ्गले त्वियमेव कान्तोत्पीडा।

इह नवमालिका नजभयैः स्यात् ॥ ६४ ॥ इति।

इह छन्दःशास्त्रे अष्टाभिश्चतुर्भिश्च यतिरित्याहु र्वृद्धाः॥

स्वरशरविरतिर्ननौ रौ प्रभा ॥ ६५ ॥ इति।

स्वरैः षड्जादिभिः सप्तभिः शरैः पञ्चभिश्च यति र्यत्र।

भवति नजावथ मालती जरौ ॥ ६६ ॥ इति।

पञ्चभिः सप्तभिश्च यतिः।

जरौ जरौ वदन्ति पञ्च चामरम् ॥ ६७ ॥

अभिनवतामरसं नजजाद् यः ॥ ६८ ॥ इति।

स्पष्टम्। इदमेवान्ये ललितपदमाहुः। पादे यतिः।

तथा, नयुगरयुगलं च गौरी मता ॥

पञ्चमुनी भ्मौ सात् सयुता ललना ॥

ललितमभिहितं नौ म्रौ नामतः।

द्रुतपदं भवति नभनयाश्चेत्॥ अत्र वृत्त संख्या ४०८६।

अथातिजगती १३।

तुरगरसयति र्नौ ततौ गः क्षमा॥ ६८॥ इति।

ननततगुरुभिः क्षमा, सप्तभिः षड्भिश्च तत्र यतिः। चन्द्रिकेत्यन्ये।

म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्॥ ७०॥ इति।

त्रिभि र्दशभिश्च यतिर्यत्र सा। [* चतुर्ग्रहैरिह रुचिराजभौसरौगः, B.

* चतुर्ग्रहैरतिरुचिरा जभस्जगाः॥ ७१॥ इति।

जभसजगैश्चतुर्षु नवसु च यतौ अतिरुचिरा।

वेदै रन्ध्रै म्तौ यसगा मत्तमयूरम्॥ ७२॥ इति।

वेदाश्चत्वारो रन्ध्राणि नव।

उपस्थितमिदं ज्सौ त्सौ सगुरुकं चेत्॥

सजसा जगौ भवति मञ्जुभाषिणी॥ ७३॥ इति।

स्पष्टम्। पञ्चभिरष्टभिश्चात्र यतिः।

ननततगुरुभि श्चन्द्रिकाश्वर्तुभिः॥ ७४॥ इति।

अश्वाः सप्त ऋतवः षट्। इयं क्षमैवाचार्यमतभेदेन संज्ञान्तरार्थं

तथा, यमौ रौ विख्याता चञ्चरीकावली गः। [पुनरुक्ते।

जभौस्जगावतिरुचिराम्बुधिग्रहैः।

भरतमतेनेयमेव पूर्वं अतिरुचिरोक्ता।

नसरयुगगै श्चन्द्रलेखर्तुलोकैः।

षड्भिः सप्तभिश्च यतिः।

ऋतुमुनियति विदुरननौ तौ गुरुः॥

अत्र वृत्तसंख्या ८१९२।

अथ शक्करी १४॥

म्तौ म्सौ गावसग्रहविरतिरसम्बाधा॥ ७५॥ इति।

मतनसगणै गुरुभ्यां चासम्बाधा नाम। अक्षै र्वाक्येन्द्रियैः पञ्चभि र्ग्रहै-

र्नवभिश्च यति र्यत्र सा तथा।

ननरसलघुगैः स्वरैरपराजिता ॥ ७६ ॥ इति।

स्वराश्च स्वराश्चेतेत्रकशेषे सप्तभिः सप्तभिश्च यति र्भवति ॥

ननभनलघुगैः प्रहरण * कलिता ॥ ७७ ॥ * कलिका, A.

पूर्वोक्तैव यतिः।

उक्ता वसन्ततिलका तभजा जगौ गः ॥ ७८ ॥ इति।

तभजजा गणा गुरू चेति वसन्ततिलका।

सिंहोन्नतेयमुदिता मुनिकाश्यपेन ॥ ७९ ॥ इति।

काश्यपेन मुनिनेयं वसन्ततिलकैव सिंहोन्नतोक्तेति संज्ञान्तरोक्तिः।

उद्धर्षिणीयमुदिता मुनिसैतवेन ॥ ८० ॥ इति।

सैतवेन त्वाचार्येण इयमुद्धर्षिणीतुरक्ता।

इन्दुवदना भजसनैः सगुरुयुग्मैः ॥ ८१ ॥ इति।

गुरुयुगलसहितै र्भजसनैः।

द्विःसप्तच्छिदलोला म्सौ म्भौ गौ चरणे चेत् ॥ ८२ ॥ इति।

द्वि र्द्विवारं सप्तसु छिदित् यति र्यस्याः सा अलोला नाम।

तथा, ननतजगुरुगैः सप्तयति र्नंदी स्यात् ॥

लक्ष्मीरम्तविरामा मृसौ तभौ गुरुयुग्मम् ॥

त्रिननगगिति वसुयति सुपवित्रम् ॥

मध्यक्षामा युगदशविरमा म्भौ न्यौ गौ ॥

इदमेव कुटिलमित्यनेत्र।

नजभजला गुरुश्च भवति प्रमदा ॥

सजसा यलौ गितिशरग्रहै र्मञ्जरी।

नजभजगै र्गुरुश्च वसुषट् कुमारी ॥

नरनरै र्लगौ च रचितं रुकेशरम् ॥ अत्र वृत्तसंख्या १६३८४ ॥

अथातिशक्करी १५।

द्विहतहयलघुरथगिति शशिकला ॥ ८३ ॥ इति।

द्विगुणिता हया: सप्त लघवो यत्र सा तथा अथ तदनन्तरं गुरु: गुर्विता-श्चतुर्दश लघव: शशिकलेत्यर्थः । इयमेव पैङ्गले ननननसैश्चन्द्रावर्त्ता नामोक्ता । अत्र सप्तभिरष्टभिश्च यतिरिति सम्प्रदाय: ॥

स्रगिति भवति रसनवकयतिरियम् ॥ ८४ ॥ इति ।

इयं शशिकलेव रसेषु षट्सु नवसु यतौ स्रगिति संज्ञिता मालेत्यर्थः ।

वसुहययतिरिह मणिगुणनिकर: ॥ ८५ ॥ इति ।

अष्टसु सप्तसु च यतौ इयमेव शशिकला मणिगुणनिकरसंज्ञितेति । यति-भेदेन संज्ञान्तरद्वयमुक्तम् ।

ननमयययुतेयं मालिनी भोगिलोकै: ॥ ८६ ॥ इति ।

भोगिभि र्नागै रष्टभि र्लोकै र्भूरादिभि: सप्तभि र्यताविति शेष: । नाग-लोकैरिति रुचिर: पाठ: ।

भवति नजौ भजौ रसहितौ प्रभद्रकम् ॥ ८७ ॥ इति ।

रसहितौ रगणयुक्तौ । सप्तस्वष्टसु च यति: ।

सजना नयौ शरदशयतिरियमेला ॥ ८८ ॥ इति ।

शरेषु पञ्चसु दशसु च यतौ सजननयैरेला नाम ।

नौ स्यौ यान्तौ भवेतां सप्ताष्टभिश्चन्द्रलेखा ॥ ८९ ॥ इति ।

यान्तौ यगणयुक्तौ ।

तथा, मा वाणा सुत्र र्यस्यां सा कामक्रीडासंज्ञा ज्ञेया ॥

नजभजरै विराजितमिदं * हकेसरम् ॥ * सुखेलकम् A.

चन्द्रलेखाभिधा रौ स्यौ यो विराम: स्वराष्टौ ॥

ननतभरकृताङ्गैः स्वरैरुपमालिनी ॥ अत्र वृत्तानि ३२७६८ ॥

अथाष्टि: १६ ॥

भ्रतिनगै: स्वरात् खमृषभगजविलसितम् ॥ ९० ॥ इति ।

भ्रौ र त्रयो नाश्च गुरुश्च तै र्विग्रह:, स्वरात् सप्तमात् परं खं विरामो यदि तदेतिशेष: । सप्तसु यति:, पादान्ते यति: प्राप्तैवेति सा नोक्ता । स्वरात् परं खं शरीरच्छिद्रं नवकं यतिस्थानमिति शेष इति वार्थ: ऋषभेत्यादि

सर्वं नाम।

नजभजरैः सदा भवति वाणिनी गयुक्तैः ॥ ८१ ॥ इति।

गयुक्तैः गुरुयुक्तैः।

तथा, चित्रसंज्ञमीरितं रजौ रजौ रगौ च वृत्तम् ॥

जरौ जरौ ततो जगौ च पञ्चचामरं वदेत् ॥

सङ्कथिता भगौ नरनगाश्च धीरललिता ॥

पञ्चभकारयुताश्वगतिर्यदि चान्त्यगुरुः ॥ अत्र संख्या ६५५३६।

अथात्यष्टिः १७।

रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी ॥ ८२ ॥ इति।

रसैः षड्भिः रुद्रैरेकादशभिश्छिन्ना यतिमती।

जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः ॥ ८३ ॥ इति।

वसुभिरष्टभिर्ग्रहैर्नवभिश्च यतिमती।

दिङ्मुनि वंशपत्रपतितं भरनभनलगैः ॥ ८४ ॥ इति।

दिशो दश मुनयः सप्त दिशो मुनयश्चेति समाहारे छन्दोविशेषणं यतिस्थाने, न च तत्संख्याकाक्षररूपता विवक्षिता दिङ्मुनिभिर्वंशपत्रपतितमिति। एकं वा पदं यतिपदस्य मध्यमस्य लोपेन वा समासः। तत्र यतिस्थानमिति वाध्याहारः। दिङ्मुनियतीति पदेऽन्त्यपदलोप इति केचित्। लुप्तविभक्त्यन्तमित्यन्ये। तदुभयं चिन्त्यम् ॥

रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा ॥ ८५ ॥ इति।

षट्सु चतुर्षु सप्तसु च त्रिषु स्थानेषु यतौ हरिणी नाम।

मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेत् ॥ ८६ ॥ इति।

मभनततगगैर्मन्दाक्रान्ता जलधिषड्गैश्चतुर्भिः षड्भिरगैः पर्वतैः सप्तभिः।

हयदशभिर्नजौ भजजला गुरु * नर्कुटकम् ॥ ८७ ॥ इति।

सप्तभिर्दशभिश्च यतिः। [ * नर्दटकं A.

मुनिगुहकार्णवैः कृतयति वद कोकिलकम् ॥ ८८ ॥ इति।

मुनयः सप्त गुहस्य स्कन्दस्य कानि मुखानि षट्, अर्णवा चत्वार-

स्तैः रसता यति र्यत्र तत्कुटकमेव कोकिलकं वद ब्रूहीति मिथ्योपदेशः। यतिभेदेन तस्यैवान्या संज्ञेति।

तथा, रसयुगहययुङ्नौ म्रौ स्रो लगौ च्चि यदा हरिः॥

भवेत् कान्ता युगरसहयै र्यभौ नरसा लगौ॥

ससजा भजगा गु दिक्स्वरै र्भवति चित्रलेखा॥ अत्र वृत्तसंख्या

अथ धृतिः १८॥ [१३१०७२॥

सप्ताङ्गतर्कैश्चेः कुसुमितलतावेल्लिता म्तौ नयौ यौ॥ ९९॥ इति॥

भूतानि पञ्च ऋतवः षट् अश्वाः सप्त।

तथा, मात् सो जौ भरसंयुतौ करि (८) वाण (५) कै (५) र्हरिणप्लुतम्॥

यदिह नयुगलं ततो वेदरेफै र्महामालिका॥

पञ्चभकारकृताश्वगति र्यदि चान्तसरचिता॥

सुधातर्कैस्तर्कै र्भवति ऋतुभि र्यो मो नसतसाः॥ तर्काः षट्।

वर्णाश्चै र्मननततमकैः कीर्तिता चित्रलेखेयम्॥ वर्णाश्चत्वारः।

भाद् रननानसौ भ्रमरपदकमिदमभिहितम्॥

शार्दूलं वद मासषट्कयति मः सौ जसौ रो मश्चेत्॥ मासा द्वादश।

अर्थाश्चाश्वै र्मभनयरयुगै र्वृत्तं मतं केशरम्॥ अर्थाश्चत्वारः।

म्तौ नजौ भ्रौ चेञ्चलमिदमुदितं युगे मुनिभिः स्वरैः॥ अत्र

अथातिधृतिः॥१९॥ [वृत्तानि २६२१४४॥

सूर्याश्चै र्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्॥ १००॥ इति॥

द्वादशभिः सप्तभिश्च यतिः। तथा,

नयुगलजगुरु निरन्तरं यदा स पञ्चचामरः॥

रसर्त्वश्चै र्यमौ न्सौ ररगुरुयुता मेघविस्फूर्जिता स्यात्॥

भूताश्वाश्वान्तं मतनसररगैः कीर्तितं पुष्पदाम॥

वृत्तं विम्बाख्यं शरमुनितुरगै र्मतौ न्सौ ततौ चेद्गुरुः॥

इयं छाया ख्याता ऋतुरसहयै र्यौ मनसा भ्तौ गुरुः॥

रसैः षड्भिर्लोकै र्यमनसजजा गुरु र्मकरन्दिका॥

*युगाश्वैः स्याद् यभनयजजगाः कीर्तिता मणिमञ्जरी। * इना,
गजाब्धितुरगैर्जसौ जसतभा गश्चेत् समुद्रतता॥ [A.

अत्र वृत्तानि ५२४२८८।

अथ कृतिः २०।

श्रेयाः सप्ताश्व षड्भिर्मरभनययुता भ्लौ गः सुवदना॥१०१॥ इति।

सप्तभिः सप्तभिः षड्भिश्च यतिः।

त्री रजौ गलौ भवेदिहेदृशेन लक्षणेन वृत्तनाम॥१०२॥

त्रिवारं रगणजगणौ गुरुलघू चेदेतादृशेन लक्षणेन वृत्तं नाम गुरुलघुक्रमेणेत्यर्थः। अत्र पादान्ते यतिः। ढलोपे पूर्वस्य दीर्घोऽण इति त्रिरित्यत्र दीर्घः। तथा, रसैरश्वैरश्वैर्यमननततगैर्गै ने शोभेयमुक्ता॥

अत्र संख्या १०४८५७६। [१०३॥ इति।

अथ प्रकृतिः २१॥

म्रौ भ्तौ यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्॥

मरभनैर्यगणत्रयेण च स्रग्धरा त्रिवारं मुनिषु यतियुक्ता सप्तसु सप्तसु सप्तसु यतिमतीत्यर्थः। तथा,

सलिलनिधिर्भवेदिह नजौ भगणो जगणास्त्रयश्च रः॥

अन्येषां मते सिद्धकमिति संज्ञितमेतत् अत्र संख्या २०९७१५२।

अथाकृतिः २२।

भ्मौ नरना रनावयगुरू दिगर्कविरमं हि भद्रकमिति॥१०४॥

दिक्षु दशसु अर्केषु द्वादशसु च विरमो विरतिर्यस्य तत् तथा प्रसिद्धम्॥ तथा,

सप्तभकाररचितावसितौ सगुरुः कविभिः कथिता मदिरा॥

अत्र वृत्तानि ४१९४३०४॥

अथ विकृतिः २३। [१०५॥ इति।

यदिह नजौ भजौ भजभलगाः स्यादश्वललितं हरार्कयतिमत्॥

हराः ११, अर्काः १२। [१०६॥ इति।

मत्ताक्रीड़ा मौ त्नौ नौ नल्गिति भवति वसुशरदशयतियुता।

वसवोऽष्टौ पञ्चदश च तेषु यतिमती। अष्टमे पञ्चदश इति च वर्णे यतिः कार्येत्यर्थः न तु पञ्चसु दशसु चेत्यर्थः, मत्ताक्रीड़ा मौ त्नौ नौ नौग् वसुपञ्चदशकाविति सूत्रे द्विवचननिर्देशात्। अन्यथा हि बहुवचनं स्यात्। अन्यैस्तु वाजिवाहनमेतदुक्तम्। अत्र संख्या ८३८८६०८॥

अथ संकृतिः २४॥

भूतमुनीनैर्यतिरिह भतना स्भौ भनयाश्च यदि भवति तन्वी॥१०७॥ इति। भूतानि पञ्च मुनयः सप्त इनाः सूर्या द्वादश अत्र पैङ्गले द्वादशसु च यतिरुक्ता॥ अत्र संख्या १६६७७२१६॥

अथातिकृतिः २५॥ [१०८॥ इति।

क्रौञ्चपदा भमौ स्भौ ननना न्गाविषुशरवसुमुनिविरतिरिह भवेत्॥ इषवः पञ्च शराः पञ्च वसवोऽष्टौ मुनयः सप्त एतेषु विरतिर्यस्याः सा। अत्र संख्या ३३५५४४३२।

अथोत्कृतिः २६॥ [इति।

वस्वीशाश्वच्छेदोपेतं ममतनयुगनरसलगैर्भुजङ्गविजृम्भितम्॥१०९॥ वसवः ८, ईशाः ११, अश्वाः सप्त एतैश्छेदेन यत्या युक्तम्॥ [११०॥ इति।

मो नाः षट् सगगिति यदि नवरसरसशरयतियुतमपवाहाख्यम्॥ मः मगणः षड्नाः नगणाः सगणाः गः गुरुः पुनर्गुरुश्च नवभिः षड्भिः पुनः षड्भिः पञ्चभिश्च यत्या युतमपवाहाख्यकम्। अत्र वृत्तसंख्या ६७१०८८६४॥

इति वृत्तरत्नाकरटीकायामुक्तादिप्रकरणम्॥

---

इदानीं समवृत्तसङ्गेन समवृत्तरूपान् दण्डकानाह।

यदि ह नयुगलं ततः सप्तरेफास्तदा चण्डवृष्टि * प्रपातो भवेद्दण्डकः ॥१११॥ इति।

* प्रयातो A.

यदीति यदेत्यर्थेऽव्ययम्। हेति प्रसिद्धर्थेऽव्ययं वा। नयुगलं नगणद्वयं तत-

स्तदनन्तरं सप्त रगणाः स चण्डवृष्टिप्रपातो नाम दण्डकः। इदमेवोदाहरणं पादे। इयं च संज्ञा रातमाण्डव्यव्यतिरिक्तपिङ्गलादिमते। न ताभ्यां त्वेतस्य संज्ञान्तरमकारि॥ [ ११४ ॥ इति।

प्रतिचरणविवृद्धरेफाः स्युरर्णार्णवव्यालजीमूतलीलाकरोद्दामसंख्यादयः॥

यद्यपि प्रतिचरणं विवृद्धो रेफो रगणो येषु ते तथेति व्युत्पत्त्या प्रथमे पादे नौ ततोऽष्टौ रेफा, द्वितीये नव, तृतीये दश, चतुर्थे एकादशेति वृद्धिरित्यर्थः प्रतीयते, तथापि ग्रन्थान्तरविरोधात् प्रतिदण्डकं चरणेषु विवृद्धा रेफा यस्मेत्ति विग्रहेणोत्तरदण्डकेषु चरणचतुष्टयेऽपि एकैकरेफ इत्यर्थाश्रयणेन ग्रन्थान्तराविरोधः कार्यः। ततश्च नाभ्यां रगणाष्टकेन च घटितपादोऽर्णाख्यो दण्डकः, रगणनवकेनार्णवः, दशभि र्व्यालः, एकादशभि जीमूतः, द्वादशभि र्लीलाकरः, त्रयोदशभिरुद्दामः, चतुर्दशभिः शंखः सर्वत्रादौ नगणद्वयं कार्यम्। आदिशब्दात् पञ्चदशादिरारामसंग्राम-सुराम-वैकुण्ठ-सोत्कण्ठ-सार-कासार-विस्तार-संहार-नीहार-मन्दार-केदार-साधार-सत्कार-संस्कार-माकन्द-गोविन्द-सानन्द-सन्दोह-नन्देत्येवमादिनामका एकैकरगणवृद्ध्या नद्वयोत्तरैकत्रिंशदधिकशतत्रयरगणघटितैकोनसहस्राक्षरपादपर्यन्तं कविप्रयोगानुसारेण दण्डका ज्ञेयाः॥ यदाहुः "एकोनसहस्राक्षरपर्यन्ता दण्डकाह्वयः प्रोक्ताः। वर्णत्रिकगणवृद्ध्या नद्वितयाद्या महामतिभिः" इति। तथाच, रगणघटितदण्डकाः पञ्चविंशत्यधिकशतत्रयसंख्याका भवन्ति ३२५। एवं यगणादिघटितदण्डका अपि। तत्र रीतिप्रदर्शनायोदाहरणं ममैव यथा, त्रिभुवनसुखहेतवे धातृमुख्यामरप्रार्थनासार्थनावर्षिचिन्तामणे, दशरथसुतयागसौभाग्यतस्तत्तनूजन्मतास्थापितश्रोतमार्गार्गल। मुनिवनगतताटकाकण्टकीमूलकुद्दालितस्वीयबाणावले राघव, कुशिकयजनसिद्धये व्योम कृत्वा शरैश्चण्डवृष्टिं प्रयासि प्रहन्तुं रिपून्॥ एवमर्णादिषु अपि उदाहार्यम्।

प्रचितकसमभिधो धीरधीभिः स्मृतो दण्डको नद्वयादुत्तरैः सप्तभिर्यैः ॥ ११५ ॥ इति।

नगणद्वयादुत्तरभाविभिः सप्तभि र्यगणै र्धीरैर्बुद्धिभिः कविभिः प्रचितक-संज्ञको दण्डकउक्तः प्रचितक इति समभिधा नाम यस्येति विग्रहः। अत्रापि पूर्ववदेकैकयगणवृद्ध्या दण्डकाः कार्याः। यैरित्युपलक्षणम् अष्टभिरपि गणैः कविप्रयोगानुरोधाद्भोगावलीविरुदावल्यादिषु दण्डकाना-मिष्टत्वात्। यद्यपि "शेषः प्रचितः" इति सूत्रं वृत्तिकृता रेफाष्टका-दिरचितदण्डकपरं शेषशब्दमङ्गीकृत्य रगणघटितानामेव चण्डवृष्टिप्रपातो-र्द्धभाविनां प्रचित इति समापनसंज्ञाभिधानार्थतया व्याख्यातम्। अतएव चाह सः "प्रथमकथितदण्डकश्चण्डवृष्टिप्रपाताभिधानो मुनेः पिङ्गला-चार्यनाम्नो मतः, प्रचित इति ततः परं दण्डकानामियं जातिरेकैक-रेफाभिवृद्ध्या यथेष्टं भवेत्। स्वरुचिरचितसंज्ञया तद्विशेषैरशेषैः पुनः काम-मन्येऽपि कुर्वन्तु वागीश्वराः, भवति यदि समानसंख्याक्षरै र्यत्र पादव्यवस्था ततो दण्डकः पूज्यतेऽसौ जनैः" इति। तथापि यगणादिदण्डकानामपि कविप्रयुक्तत्वादुक्तरगणरचितदण्डकव्यतिरिक्तयाद्दृशकृतदण्डकानामेव शेषशब्दो-द्दिष्टानामपि तत् संज्ञाज्ञापनार्थतां सूत्रस्याभिप्रेत्य व्याख्या। अत्र तत्कृतव्याख्यामनुसरत एव ममादिकोदाहरणेऽप्यदोषः। सर्वेषु दण्डकेषु पादान्ते यतिः। श्रुतिसौकर्येण वा अग्रेऽपि दण्डका अनेरुक्ताः। यथा,

नयुगलगुरुयुगैर्यकाराः कवीच्छानुरोधात्तदा
यत्र वध्यन्त एषोऽपरो दण्डकः पण्डितैरीरितः सिंहविक्रान्तनामा॥
यत्र रेफान् कविः स्वेच्छया पाठसौभाग्यसापेक्षया-
रोपयतेऽत्र धीरैः स्मृतो दण्डको मत्तमातङ्गलीलाकरः॥
लघु गुरुक्रमेण यत्र बध्यते सुधीभिरिच्छया
स दण्डकस्त्वनङ्गशेखरः स्मृतः॥
स्वेच्छया रजौ क्रमेण सन्निवेशयत्युदारधीः कविः स
दण्डकः स्मृतो जगत्यशोकमञ्जरी॥
सगणः सकलः खलु यत्र भवेत्तमिह
प्रवदन्ति बुधाः कुसुमस्तवकम्॥

यकारैः कवीच्छानुरोधान्निबद्धैः प्रसिद्धो

विशुद्धोऽपरो दण्डकः सिंह * विक्रान्तनामा ॥  * विक्रीड़, A.

एवं मेघमालाकुसुमस्तरणोत्तरकामबाणादयो दण्डकाः षड्विंशत्यक्षराधिकाक्षरपदाः कविप्रयोगानुसारेण ज्ञेयाः। षड्विंशत्यक्षरन्यूनतायां तु पूर्वोक्तासु जातिष्वेवान्तर्भावो यथायोगं भवति॥

इति श्रीमद्गङ्गारामेश्वरसूरिसूनुनारायणभट्टविरचितायां वृत्तरत्नाकरटीकायां समवृत्ताध्यायः॥

---

एवं समवृत्तान्यभिधायाधुना अर्धसमान्याह।

विषमे यदि सौ सलगा दले भौ युजि भाद्गुरुकावुपचित्रम् ॥१॥ इति।

विषमे दले प्रथमे तृतीये च पादे सौ सगणद्वयं सलगाश्च सगणलघुगुरवः, युजि समे द्वितीये चतुर्थे च पादे भौ भगणौ पुनर्भगणस्ततो द्वौ गुरू तदोपचित्रं नाम। अर्धसमत्वात् द्वितीयार्धमप्येवमेवोदाहार्यम्। एवमन्येऽपि।

भत्रयमोजगतं गुरुणी चेद् युजि च नजौ जयुतौ द्रुतमध्या॥ [२॥ इति।

ओजगतं विषमपादगतं भगणत्रयं च गुरुणी चेद् द्व्यक्षरे, युजि समपादे जयपरौ नगणजगणौ चेत् सा द्रुतमध्येति नाम। उपचितापातलिकापरान्तिकेयम्। (अत्रापरान्तिकासन्निवेशो भ्रान्तः)।

सयुगात्सगुरू विषमे चेद्भाविह वेगवती युजि भाद्गौ ॥३॥ इति।

विषमे पादे सत्रयं गुरुश्च, युजि समे पादे भगणत्रयं गुरू च इह छन्दःशास्त्रे वेगवती नाम, आपातलिकैवेयम्।

ओजे तपरौ जरौ गुरुश्चेन्मसौ ज्गौ भद्रविराड् भवेदनोजे ॥ ४ ॥ इति।

ओजे विषमे पादे तगणात् परौ जगणरगणौ गुरुश्च, अनोजे विषमे

मसजगगुरवश्च भद्रविराड् भवेत्। औपच्छन्दसिकस्यैवेयं गणनिवेशविशेषे संज्ञा॥

असमे सजौ सगुरुयुक्तौ केतुमती समे भरनगाद्गः॥ ५॥ इति।

विषमे दले पादे सजसा गणा गुरुश्च, समे भरना गणा गुरू च केतुमती नाम। भरनगादिति समाहारैकवचनम्। [ ६॥ इति।

आख्यानकी तौ जगुरू ग ओजे जतावनोजे जगुरू गुरुश्चेत्॥

तौ गणौ जगणगुरू गुरुश्चौजे विषमे पादे, अनोजे समे पादे जतजगगुरवस्तदाख्यानकी नाम। [ ७॥ इति।

जतौ जगौ गो विषमे समे चेत् तौ जगौ ग एषा विपरीतपूर्वा॥

विषमे जतजगगुरवः, समे ततजगगुरवस्तदैषा आख्यानकी विपरीतशब्दपूर्वा विपरीताख्यानकीत्यर्थः। अनयोरुपजात्यन्तर्भावेऽपि विशेषसंज्ञाविधानार्थं अर्धसमाध्याये पाठः।

सयुगात् सलघू विषमे गुरु युजि नभौ भरकौ हरिणप्लुता॥८॥ इति।

सगणद्वयात् सगणलघू गुरुश्च विषमपादे, युजि समे पादे नभभरा गणा हरिणप्लुता नाम।

अयुजि ननरला गुरुः समे नजमपरवक्त्रमिदं ततो जरौ॥ ९॥ इति।

विषमे ननरलगुरवः, समे नजजराः अपरवक्त्रं नाम। अस्य वैतालीयान्तर्गतत्वेऽपि संज्ञान्तरविधानार्थमत्रोक्तिः। [॥ १०॥ इति।

अयुजि नयुगरेफतो यकारो युजि च नजौ रगाश्च पुष्पिताग्रा

विषमे नयुगलरेफयकाराः, युजि समे नजजरगुरवस्तदा पुष्पिताग्रा नाम। इयमप्यौपच्छन्दसिकान्तर्भूतैव विशेषसंज्ञार्थमिहोक्ता।

वदन्त्यपरवक्त्राख्यं वैतालीयं विपश्चितः।
पुष्पिताग्राभिधं केचिदौपच्छन्दसिकं तथा॥ ११॥

विपश्चितः पण्डिता अपरवक्त्राख्यं वैतालीयमेव वदन्ति। पुष्पिताग्राभिधं छन्दः औपच्छन्दसिकमेव केचिदाहुः। इदं स्वस्यापि सम्मतम्। भावस्तूक्त एव।

स्यादयुग्मके रजौ रयौ समे चेत् जरौ जरौ गुरु, र्यवात् परा म-
तीयम् ॥ १२ ॥ इति।

विषमपादे रजरयाः, समे जरजरगाः यवात् यवशब्दात् परा मती-
यवमतीत्यर्थः।

तथा, सौ लगौ विषमे यदि, सजजा गुरु र्ललिता समे ॥
ओजपरौ भरौ जरौ गुरू समे जौ यौ
कीर्तिता बुधैरियं तु षट्पदाख्या ॥
रो जरौ जसंयुतौ पदे पदेऽथ, युग्मे तरौ जरौ गुरु र्मृगी यवानी ॥
अयुजि ननरभाः समेकेऽपि तु, नयुगरयुगलं तदा कौमुदी ॥
यदि विषमे भवतो नजौ जरौ, सजया समे जगुरू मञ्जुसौरभम् ॥

तथा अष्टाविंशति र्लघव एको गुरुरिति विषमः पादः, त्रिंशल्लघवः एको गुरुश्चेति समः शाशिखान्ता। इयमेव विपर्यस्तपादा खञ्जा नाम। एते द्वे अपि द्विखण्डकप्रकरणोक्तशिखाखञ्जयोश्छन्दसोः षष्ट्यचरतामङ्गीकृत्य यथाश्रुतव्याख्याने तदतिरिक्ते अत्र ज्ञेये। यदा त्वस्मदुक्तप्रकारेण तत्र सकलशब्दं पाद-परमाश्रित्य व्याख्यायते तदैवैतयोरुक्तत्वान्नात्र वक्तव्यता भवति।

इति श्रीमद्भट्टरामेश्वरसूरिसूनुनारायणभट्टविरचितायां वृत्तरत्नाकर-व्याख्यायां अर्धसमाध्यायस्तुर्यः॥

---

अर्धसमान्यत्राभिधायोद्देशक्रममनुसृत्य विषमवृत्तानि लक्षयति।

मुखपादोऽष्टभि र्वर्णैः, परे तु मकरालयैः क्रमाद्वृद्धैः।
सततं यस्य विचित्रैः पादैः सम्पन्नसौन्दर्यम्
तदुदितममलमतिभिः पदचतुरूर्ध्वाभिधं वृत्तम्॥ १ ॥ इति।

यस्य वृत्तस्य मुखपादः अग्रपादो वर्णाष्टकेन, परे द्वितीयादयः पादा मकरालयैः समुद्रैश्चतुर्भिरचरैः क्रमाद्वृद्धैः सततं नैरन्तर्येण सूत्रसदृक्तं निर्मलबुद्धिभिः पिङ्गलादिभिः पदचतुरूर्ध्वाभिधमुदितमुक्तम्। किं विशिष्टं विचित्रैः विलक्षणैः पादैः जातं सौन्दर्यं यस्य तादृशं

अत्र वर्णैरिति सम्पन्नसौन्दर्यमिति च वदता गुरुलघुविवेशनियमो नास्ति। किन्तु श्रोतृश्रोत्रसौभाग्यार्थं वर्णवैचित्र्यं विधेयमिति सूचितम्। प्रथमपादोऽष्टाक्षरः द्वितीयो द्वादशाक्षरस्तृतीयः षोड़शाक्षरश्चतुर्थो विंशत्यक्षरः कार्य इति फलितोऽर्थः। अत्र चैकद्वित्रिचतुष्काणां परस्परताड़नया पादानां परस्परसङ्करे शंखचक्रगदापद्मानां परस्परसङ्करे केशवरचनाया इव चतुर्विंशति भेदा भवन्ति। तत्प्रस्तारतो यथा।*

८. १२. १६. २०, ८. १६. १२. २०, ८. २०. १६. १२, ८. १२. २०. १६, ८. १६. २०. १२, ८. २०. १२. १६, १२. ८. १६. २०, १२. १६. ८. २०, १२. २०. १६. ८, १२. ८. २०, १६, १२. १६. २०. ८, १२. २०. ८. १६, १६. १२. ८. २०, १६. ८. १२. २०, १६. २०. ८. १२, १६. १२. २०. ८, १६. ८. २०. १२, १६. २०. १२. ८, २०. १२. १६. ८, २०. ८. १६. १२, २०. १२. ८. १६, २०. १६. ८. १२, २०. १६. १२. ८, २०. ८. १२. १६।

अत्रैकैकपंक्तिस्थितकोष्ठकचतुष्टयस्थिताङ्कसमानाक्षरक्रमिकपादैरेकैको भेदो ज्ञेयः। तत्र प्रथमभेदे मूलस्थितमुदाहरणम्। द्वितीये तु ममैव यथा। लोभं लङ्घय विलयं ८ लाभालाभावुभौ भावय समानौ भव धीरः १६। यत्नाद्गुरुजनगौरवमाचर १२ यदि तत्रास्मिन्नमुष्मिंश्च लोके यशो-विशालमाशास्यं स्यात् २० ॥ इदमेवोदाहरणं पादव्यत्ययेनेतरेषु द्वाविंशतिभेदेषु योज्यम्। एतस्यैव प्रतिपादान्ते गुरुद्वयनियमे संज्ञान्तरमाह।

प्रथममुदितवृत्ते, विरचितविषमचरणभाजि।
गुरुकयुगलनिधन इह सहित आङ्गा
लघुविरचितपद*विरतियतिरिति भवति पीड़ः ॥ २ ॥ इति।

* रचन A.

विरचितान् विषमान् विषमसंख्याकाक्षरान् चरणान् भजति, एवंकृते

* बोधसौकर्याय कोष्टकान्यत्र क्रमाद्वारा प्रदर्शितानि।

प्रथमोक्ते पदचतुरूर्ध्वाभिधे वृत्ते इति सर्वोऽनुवादः, गुरुयुग्मं निधने यस्य तादृशे सति स्वार्थे कः, इतीत्थं प्रकारः आङा उपसर्गेण सहितः पीड़ः आपीड़ो भवतीत्यर्थः। कीदृक्, लघुकृतपदरचनया यति यस्मिन् अन्ते गुरुद्वयमत्र नियतत्वादितरभागे लघुविरचितत्वं श्रुतिसुखकरी च लघुपादयतिः कार्येति सूचनाय यतिग्रहणम्। विशिष्टानुवादस्त्वाष्टाद्यक्षरेष्वेव पादेषु अन्ते गुरुद्वयं कार्यं न तु ततोऽतिरिक्तमिति सूचनार्थः। आपीड़ इति संज्ञामाच्छन्दस्यप्रवेशादाङा सहित इत्युक्तिरीतिः। पूर्वोक्तरीत्यापीड़ोऽपि चतुर्विंशतिप्रकारो भेदः। प्रथमभेदोदाहरणमिदम्। आपीड़ एव सप्तमाष्टमैकादशान् भेदान् वुत्पादनाय वुत्पादयति। प्रथमे त्विभिः।

प्रथम * मितरचरणसमुत्थं, श्रयति स यदि लक्ष्म। * अपर A.

इतरदितरगदितमपि यदि च तुर्यं

चरणयुगलकमविकृतमपरमिति कलिका सा ॥ ३ ॥ इति।

तुर्यशब्देन श्लोकचतुर्थांशः पाद उच्यते। ततश्च प्रथमं तुर्यं प्रथमश्चरणः इतरचरणसमुत्थं स्थानमितरद्वितीयचरणगतं लक्ष्म लक्षणं श्रयति, इतरदपि द्वितीयमपि इतरगदितं प्रथमगदितं श्रयति च यदि अपरं चरणद्वयकं तृतीयचतुर्थरूपमविकृतं यथा स्थितमित्येवंविधा स आपीड़ एव सा प्रसिद्धा कलिका। यद्वा स आपीड़ः प्रथमं प्रथमस्थाने प्रथमपादे द्वितीयपादलक्षणं श्रयति सा कलिका द्वादशाक्षराष्टाक्षरषोड़शाक्षरविंशत्यक्षरपादैः क्रमेण घटितेति फलितार्थः। पैङ्गले त्वेतस्या मञ्जरी नाम।

द्विगुरुयुतसकलचरणान्ता

मुखचरणगतमनुभवति च तृतीयम्।

* चरणमिह हिलक्ष्म * अपर A

प्रकृतमखिलमपि यदिदमनुभवति लवली सा ॥ ४ ॥ इति।

तृतीयश्चरणो मुखचरणगतं प्रथमचरणस्थं लक्षणमनुभवत्यवलम्बते। अपरं पादत्वयं प्रकृतमखिलं लक्ष्म आपीड़लक्षणं च यदि तदा लवली नाम। क्रमेण द्वादशाक्षरषोड़शाक्षराष्टाक्षरविंशत्यक्षरपादावलीत्यर्थः। गुरुद्वययुक्त-

चतुष्टयान्ते ति वृत्तपूरणार्थं सामान्यलक्षणमेवानूदितम् ॥

प्रथममधिवसति यदि तुर्यम्, चरमचरणपदमवसितिगुरुयुग्मम् ।
अखिलमपरमुपरिगतमिति ललितपदयुक्ता
तदियमृतधारा ॥ ५ ॥ इति ।

प्रथमतुर्ये प्रथमश्चरणः चरमचरणपदं चतुर्थचरणस्थानं प्राप्नोति चतुर्थो भवतीत्यर्थः, अपरनिखिलं प्रथमचरणत्रयम् आपीडप्रथमपादोपरिगतद्वितीयादिपादसमं तदिदं छन्दोऽमृतधारा नाम। अवसितौ गुरुद्वययुक्तमिति इदमित्यस्य विशेषणं तुर्यवत् स्वरूपकीर्तनार्थम् । ललितपदयुक्तेति वृत्तपूरणाय स्वरूपोक्तिः । द्वादशषोडशविंशत्यष्टाक्षरपादक्रमेण भवतीति सङ्कलितार्थः । यद्यपि वृत्तिकारेण प्रथमस्य तृतीयत्वे तृतीयस्य प्रथमत्वे लवली, प्रथमस्य चतुर्थत्वे चतुर्थस्य च प्रथमत्वेऽमृतधारेति षोडशद्वादशाष्टविंशत्यक्षरपादक्रमेण विंशतिद्वादशषोडशाष्टाक्षरपादक्रमेण च त्रयोदशैकोनविंशतिभेदयोरेते संज्ञे इति मञ्जर्यत्रभावेऽपि तयोर्विशेष उक्तः, उदाहरणे च तथैव कृते, तथापि प्रथमस्य विपर्यासे मञ्जरीलवल्यमृतधारा इति सूत्रस्य साधारणत्वात् 'प्रथमपादमात्रविपर्यासोक्तेरितरेषां क्रमेणाभ्यनुज्ञया वा सूत्रस्य मूलकारोक्त एवार्थस्तात्पर्यादेवमुक्तम् । आपीड़वत् पदचतुरूर्ध्वेऽपि पादव्यासे मञ्जर्याद्या भेदा ज्ञेयाः । तथा आदावेव सकलपादेषु गुरुद्वययुतं चतुरूर्ध्वं प्रत्यापीड़ः । यथा वृत्तौ, "चित्तं मम रमयति, कान्तं वनमिदमुपगिरिनदि । कूजन्मधुकरकलरवक्षतजनधृति, पुंस्कोकिलमुखरितसुरभिकुसुमचिततरुततति ॥" आदावन्ते च गुरुद्वयसहितं तदेवोभयापीड़ः । पैङ्गले त्वयमपि प्रत्यापीड़ एव । यथा तत्रैव, "कान्तावदनसरोजं, मकरन्दं घनसुरभिमधुरसाढ्यम् । पातुं रहसि सततमभिलषति मनो मे, किञ्चिन्मुकुलितनयनमविरतमणितरमणीयम् ॥" अनयोः पूर्वोक्तविधया चतुर्विंशतित्वमूह्यम् । उदाहरणानि विस्तरभयान्नोदाहृतानि स्वयमूह्यानि ॥

इति श्रीनारायणभट्टविरचितायां वृत्तरत्नाकरटीकायां पादचतुरूर्ध्वप्रकरणम् ॥

विषमवृत्तान्तराण्याह।

सजमादिमे सलघुकौ च, नसजगुरुकैरथोद्गता। [॥ ६ ॥ इति।
त्र्यङ्घ्रिगतभनजला गयुताः, सजसा जगौ चरणमेकतः पठेत्

पाद इति शेषः। आदिमे पादे सजसलघवः, अथानन्तरं द्वितीयपादे इत्यर्थः नसजगुरुषु सत्सु तृतीयेऽङ्घ्रौ भनजलघवस्ते गयुता गुरुयुक्ताः कार्या इत्यर्थः, परिशेषे चतुर्थे सजसा गणा जगुरू च चरणमेकवचननिर्देशात् प्रथममेकं चरणमेकत एकीकृतत्र द्वितीयेनेत्यर्थात् पठेत्। प्रथमद्वितीयौ पादौ विलम्बेन पठेदित्यन्तयतिं न कुर्यादित्यर्थः। सजमिति द्वन्द्वैकवद्भावः। स्वार्थे कः त्रयाणां पूरणेऽङ्घ्रौ गता ये भनजला गयुक्ताः कार्या इति। मध्यमपूरणपदलोपिसमाश्रयणेन उद्देशविधानाद्वा सर्वविधानाच्च तीयप्रत्ययोत्पत्तिरसामर्थ्यं च न भवत इति ज्ञेयम्। एकत इति एकशब्दो भावप्रधानः तृतीयार्थे च तसिः तथा चैकत्वेनेत्यर्थः। ल्यब्लोपे पञ्चमी प्रथमं द्वितीयेनैकं विधाय पठेदित्यर्थः॥

चरणत्रयं व्रजति लक्ष्म, यदि सकलमुद्गतागतम्।
नौ भगौ भवति सौरभकं, चरणे यदीह भवतस्तृतीयके ॥७॥ इति।

स्वार्थे कः। तृतीये चरणे नौ रगणनगणौ भगुरू च भवतः। चरणत्रयपरिशेषात् प्रथमद्वितीयचतुर्थरूपं उद्गतास्थितं समग्रलक्षणं भजति, तदेह शास्त्रे सौरभकं भवतीति व्यवसितिः चतदाध्याहाराभ्यामर्थः॥

नयुगं सकारयुगलं च, भवति चरणे तृतीयके। [इति।
तदुदितमुरुमतिभि र्ललितं, यदि शेषमस्य खलु पूर्वतुल्यकम् ॥ ८ ॥

तृतीयपादे ननससाः, शेषं तृतीयान्यच्चरणत्रयं पूर्वोक्तोद्गतावत् तदा बहुदर्शिभि र्ललितं नामोक्तम्। मते विषयबाहुल्येनोक्ता न तु स्वतः। अन्यथा स्थूलबुद्धित्वोक्ता निन्दैव स्यात्। स्वार्थे कः तथा उद्गतायाः प्रथमतृतीयपादव्यत्यये मञ्जरी नाम। उदाहरणमूह्यमेव।

इति वृत्तरत्नाकरटीकायामुद्गताप्रकरणम्॥

---

मसौ जभौ गौ प्रथमाङ्घ्रिरेकतः पृथगन्यत्
त्रितयं सनजरगास्ततो, ननौ सः।
त्रिनपरिकलितजयौ, प्रचुपितमिदमुदितमुपस्थितपूर्वम् ॥ ९ ॥ इति

मसजभगगुरवः प्रथमपादः। स चैकः पृथक् पठनीयः, न तु तावत् द्वितीये-नैकीकृतैरित्यर्थः। प्रथमार्थे तसिः। अन्यच्चरणत्रयं कथ्यत इति शेषः। सनजरगुरुभिर्द्वितीयः पादस्तदनन्तरं तृतीयपादे ननौ सगणश्च त्रिभिर्नगणैः परिकलितौ सहितौ जयौ गणौ चतुर्थे पादे इदं छन्द उपस्थितपदपूर्वं प्रचुपितं उपस्थितप्रचुपितमित्यर्थः। अन्यस्तु प्रथमोऽङ्घ्रिरेकः केवलः पठनीयः अन्यत् चरणत्रयं पृथक्कथनाद्भिन्नत्वे नैकीकृत्य पठनीयं न तु तत् प्रतिचरणान्तं विरामः कार्यः, ततः श्लोकार्धे तु विशेषत इत्यस्यापवादोऽयमिति व्याचख्यौ।

नौ पादेऽथ तृतीयके सनौ नसंयुक्तौ, प्रथमाङ्घ्रिकृतयतिस्तु वर्धमानम्।
त्रितयमपरमपि पूर्वसदृशमिह भवति
प्रततमतिभिरिति गदितं लघु वृत्तम् ॥ १० ॥ इति।

तृतीयपादे नौ नगणौ अथ सनौ सगणनगणौ ननगणाभ्यां युक्तौ एवं षट् गणा भवन्ति। अपरं पादत्रयं प्रथमद्वितीयचतुर्थरूपं उपस्थितप्रचुपित-तुल्यमेव भवति। इतत्रमुना प्रकारेण प्रसिद्धधीभिर्लघु सुन्दरं वर्धमानं नाम वृत्तमुदितमुक्तम्। प्रथमाङ्घ्रौ कृतया यतत्रा प्रस्तूयते प्रशस्यते प्रशस्ततया पठ्यते तत्तादृगिति वर्द्धमानविशेषणं। तुगभावस्तु आगमजमनित्यमिति स्मरणात्। तु इति भिन्नपदे तु यतिरित्यन्तं पुंलिङ्गं स्त्रीलिङ्गं वाऽनन्वितं स्यात्। यतीहेति तु पाठो निर्दोषः। अयञ्च पूर्वोक्तानुवाद एवेति व्याख्यानं तद्वदेव ज्ञेयम्।

अस्मिन्नेव तृतीयके यदा तजराः स्युः, प्रथमे च विरतिरार्षभं ब्रुवन्ति।
तच्छुद्धविराट् पुरः स्थितं, त्रितयमपरमपि यदि पूर्वसमं स्यात् ॥
११ ॥ इति।

अस्मिन् वर्धमाने एव उपस्थितप्रचुपिते एव तृतीयपादे यदि तजरगणा-

ऽथ: सुरपरं च चरणत्रयं उपस्थितप्रचुपितवत् स्यात् तच्छुद्धविराट्-पदं पुर: स्थितं पूर्ववर्तमानं यस्य तादृशमार्षभं शुद्धविराडार्षभं नाम ब्रुवन्ति वृद्धा:। संज्ञाया वृत्तेऽप्रवेशादुक्ता रीतिरियं प्रथमे पादे यतिरिति पूर्ववदेवार्थ:। पैङ्गले तु शुद्धविराडृषभमिति संज्ञा। केचित्तु प्रथमे पादे यतावार्षभम्, यदा तु प्रतिपादं यतिस्तदा शुद्धविराडादिकं तदेवेति यतिभेदाच्छन्दोद्वयमेव पृथग् वदन्ति।

इति उपस्थितप्रचुपितप्रकरणम्॥

---

अत्र ग्रन्थेऽनुक्तानि छन्दांसि सामान्यसंज्ञया गृह्णाति।

विषमाक्षरपादं वा पादैरसमं दशधर्मवत्।

यच्छन्दो नोक्तमत्र गाथेति तत्सूरिभि: प्रोक्तम्॥ १२॥ इति।

विषमाण्यक्षराणि येषु तादृशा: पादा यस्य तत्, तथा अक्षराणां वैषम्यं पादेषु गुरुलघुक्रमनियमसाम्याभावात् संख्यासाम्याभावाच्च वा, अथवा पादैरसमं स्वीयै: पादै: कृत्वा चतु:सङ्ख्याकपादैरन्यवृत्तैरतुल्यं त्रिपञ्चषडादिपादमिति यावत् न तु समसङ्ख्याकपादरहितमित्यर्थ: षट्पदाद्यसंग्रहापत्ते:। अत एव 'शेषं गाथास्त्रिभि: षड्भिश्चरणैश्चोपलक्षिता' इति प्रागुक्तं विषमाक्षरपादत्वं चतुरूर्ध्वादीनामप्यस्तीति तेषां गाथात्वं निवारयितुमाह यदिति। अत्र यच्छन्दो विशेषेण नोक्तं तदित्यर्थ: इदं चावृत्त्या स्वातन्त्र्येणापि योज्यम्॥ तेन समाक्षरपादानां समपादानां च कुड्मलदन्त्यादीनामपि गाथात्वं सिध्यति। अतएव "अत्रानुक्तं गाथा" इति सन्दिग्धाकारेण सूत्रितं पिङ्गलेन। विषमाक्षरपादस्य गाथात्वेऽष्टादशसप्तनवाक्षरमूलकारिकैवोदाहरणं पादैरसममेव। उदाहरणमाह दशधर्मवदिति। दशधर्मशब्दयोगाल्लक्षणया भारतस्था षट्पदा गाथा दशधर्मशब्देनोच्यते। सा यथा। "दशधर्मं न जानन्ति धृतराष्ट्र निबोध तान्। मत्त: प्रमत्त उन्मत्त: श्रान्त: क्रुद्धो बुभुक्षित:। त्वरमाणश्च भीरुश्च लुब्ध: कामी

च ते दश॥" इति। असमपादानां दशाष्टादशादिपादानां नाटकादिस्थनान्द्यादीनामप्यनेन गाथात्वमुक्तं भवति। यथोक्तम्। "शब्दतो वार्थतो वापि मनाक्काव्यार्थसूचना। यत्राष्टभि र्वा दशभिरष्टादशभिरेववा। षड्विंशत्या पदै र्वापि सा नान्दी परिकीर्त्तिता" इति। यच्छन्दो नोक्तमित्यस्य स्वातन्त्र्येण व्याख्या। तेनोक्तमानामपि गाथात्वं भवति। तत्र कियतीनां वृत्त्यादिपर्यालोचनयोदाहरणानि सलक्षणानि कथ्यन्ते। तत्र त्रिष्टुभि, भतनगगुरुभिः कुड्मलदन्ती नाम। यथा, कुड्मलदन्ती विकटनितम्बा किन्नरकण्ठी लघुतरमध्या। विम्बफलोष्ठी * लघुतरनेत्रा मित्र भवन्तं सुखयतु कान्ता॥ अत्र पञ्चभिः षड्भिश्च यतिः। जगत्यां, नजजरै र्वरतनुः। यथा, अयि विजहीहि दृढोपगूहनं त्यज नवसङ्गमभीरु वल्लभम्। अरुणकरोद्गम एष वर्त्तते, वरतनु सम्प्रवदन्ति कुक्कुटाः॥ षड्भिः षड्भिश्च यतिः। मभसमै र्जलधरमाला। यथा, धत्ते शोभां कुवलयदामश्यामे शैलोत्सङ्गे जलधरमाला लीना। विद्युल्लेखा कनकक्लृप्तालङ्कारा क्रीड़ासक्ता युवतिरिवाङ्के पत्युः॥ चतुर्भिरष्टाभिश्च यतिः॥ नौ रौ गोरी। यथा, प्रणमत चरणारविन्दद्वयं त्रिभुवननमितस्य गौरीपतेः। सकृदपि मनसैव यः सेवितः प्रवितरति यथेष्टमष्टौ गुणान्॥ एतस्या एव गौर्या दण्डकात् प्रागेकैकरेफवृद्धौ नामान्तराणि भवन्ति। भतनसा ललना। यथा, या कुचगुर्वी मृगशिशुनयना पीननितम्बा मदकरिगमना। किन्नरकण्ठी सुललितदशना सा तव सौख्यं वितरतु ललना॥ पञ्चभिः सप्तभिश्च यतिः। अतिजगत्याम्, सजसजगैः कनकप्रभा। यथा, कनकप्रभा पृथुनितम्बशालिनी विपुलस्तनी हरिणशावकेक्षणा। इयमङ्गना नयनयोः पथि स्थिता कुरुते न कस्य मदनातुरं मनः॥ ननततगुरुभिः कुटिलगतिः। यथा, अधरकिसलये कान्तदन्तक्षते हरिणशिशुदृशां नृत्यति भ्रूयुगम्। ध्रुवमिदमुचितं यद्विपक्षौ सताम् अतिकुटिलगतेः स्यान्महानुत्सवः॥ सप्तभिः षड्भिश्च यतिः॥ शक्वर्याम्, भजसनै र्गुरुभ्यां

* मृगशिशु P.

च वरसुन्दरी यथा, स्वादुशिशिरोज्ज्वल * जलैः सुपरिपूर्णं वीचिचयचञ्चल-विचित्रशतपत्रम्। हंसकलकूजितमनोहरतटान्तं पश्य वरसुन्दरि सरोवरमुदारम्॥ मभनयगगैः † कुटिलम्॥ यथा, अध्वन्यानां जनयति सुखमुच्चैः कूजन्, दात्यूहोऽयं पथि निचुलिनि तोयोपान्ते। ‡ कर्णाटस्त्रीरतिकुहरिततुल्यच्छन्दैर्नादैः कण्ठस्खलनकुटिलमन्द्रावर्त्तैः॥ वेदै रसैः समुद्रैश्च यतिः। अष्टौ, भरनभभगैः शैलशिखा। यथा, शैलशिखा निकुञ्जशयितस्य हरेः श्रवणे जीर्णतृणं करेण निदधाति कपिश्चपलः। क्षुद्रबधापवादपरिहारविनीत ¶ रुषः तस्य न तावतैव लघुता द्विपयूथभिदः॥ भरयननगैर्वरयुवती। कुञ्जरकुम्भपीठपीनोन्नतकुचयुगला पार्वणशर्वरीशगर्वापहमुखकमला। पीननितम्बबिम्बसंवाहनशिथिलगतिः सुभ्रू नराधिराज भूयात्तव वरयुवतिः॥ अत्यष्टौ, ससजभजगगै रतिशायिनी। यथा माघे, इति धौतपुरन्ध्रिमत्सरान् सरसि मज्जनेन श्रियमाप्तवतोऽतिशायिनीमपमलाङ्गभासः। अवलोक्य तदैव यादवानपरवारिराशेः शिशिरेतररोचिषाप्यपां ततिषु मङ्क्तुमीषे॥ दशभिः सप्तभिश्च यतिः॥ नजभजजलगैरवितथम्। यथा, श्रुतिपरि ‖ पूर्णवक्त्रमतिसुन्दरवाग्विभवम् § प्रमथितजैमिनीयमतसागरपारगतम्। अवितथवृत्तविप्रजनपूजितपादयुगं पितरमहं नमामि बहुरूपमुदारमतिम्॥ एतदेवाष्टपञ्चचतुर्भिर्यतौ कोकिलकं नाम। यथा, नवसहकारपुष्पमधुनिष्कलकण्ठतया मधुरतरस्वरेण परिकूजति कोकिलकः। प्रथमककारबिन्दुवचनैर्धनलुब्धमते तव गमनस्य भङ्गमिव सम्प्रति कर्त्तुमनाः॥ धृतौ, रसजजभरैर्विबुधप्रिया॥ यथा, कुन्दकोमलकुड्मलद्युतिदन्तपङ्क्तिविराजिता हंसगद्गदवादिनी वनिता भवेद्विबुधप्रिया। पीनतुङ्गपयोधरद्वयभारमन्थरगामिनी नेत्रकान्तिविनिर्जितश्रवणावतंसितकैरवा॥ अष्टभिर्दशभिश्च यतिः॥ अतिधृतौ, यमनसररगुरुभिर्विस्मिता। यथा माघे, श्रिया जुष्टं दिव्यैः

---

* सुगन्धिजलपूर्ण. P. † कुटिला. P. ‡ काश्मीर. P. ¶ मतेः. P. ‖ पूत. P. § तमखिल. P.

सपटहरवैरन्वितं पुष्पवर्षैः वपुष्टश्चैद्यस्य चणमृषिगणैः स्तूयमानं निरीक्ष्य। प्रकाशेनाकाशे दिनकरकरान्विक्षिपद्विस्मिताक्षैः नरेन्द्रैरौपेन्द्रं वपुरथ विशद्धाम वीक्षाम्बभूवे॥ षड्भिः षड्भिः सप्तभिश्च यतिः॥ प्रक्षतौ, नजभजजजरैः * वृतश्रीः॥ यथा माघे, तुरगशताकुलस्य परितः परमेकतुरङ्गजन्मनः प्रमथितभूभृतः प्रतिपथं मथितस्य भृशं महीभृता। परिचलतो बलानुजबलस्य पुरः सततं धृतश्रियश्चिरविगतश्रियो जलनिधेश्च तदाऽभवदन्तरं महत्॥ त्रिः सप्तसु यतिः एवमादीनि वृत्तप्रस्तारमहाकविप्रयोगेषु दृश्यमानानि गाथाख्यानि॥ यदा तु यच्छन्दो नोक्तम् अत्रेति विषमाक्षरपादमित्यस्य विशेषणं तदा समच्छन्दसां गाथात्वाभावादेतानि त्रिष्टुबादिषु एव द्रष्टव्यानि। एवमन्यान्यपि छन्दांसि कविप्रयोगानुरोधाज्ज्ञेयानि, समार्धसमविषमप्रस्तारेषु तेषामुपलम्भात्। विशेषसंज्ञाभावात्तु नोदाहृतानि। एतज्जातिवृत्तात्मना द्विविधमपि च्छन्दो न केवलं संस्कृतविषये किन्तु प्राकृतदेशभाषास्वपि कवीच्छया भवति। तत्रायैव प्राकृतादिषु गाथेति संज्ञा। यथा ममैव, सअलसिणेहमित्रंको तुयि गुणरआणाअरे उदिदो। मिलुप्पलप्पवोहे सिठिलो मा भोदु पच्छणा एसा॥ वैतालीये च शकुन्तलायां यथा, सहजे किल जे विणिन्दिए णहु दे कम्म विवज्जणीअके। पसुमालणकम्मदालुणे अणुकम्पाभिदुले ए सोत्तिए॥ एवं समादिष्वपि कर्पूरमञ्जर्यामुदाहरणानि ज्ञेयानि। भाषायामपि। तत्र महाराष्ट्रभाषायामुपजातौ यथा, अगा मुरारी भवदुःखभारी कामादिवैरी मनहेश्वरारी। मीमूढदेवा नकरीं च सेवा माजा कुठावा परितां करावा॥ गुर्जरभाषया स्रग्विणी यथा, वित्तने सङ्गवूं युक्तने भोगवूं अग्निने होमवूं विप्रने आपवूं पापने खण्डवूं कामने दण्डवूं पुण्यने सञ्चवूं रामने सेववूं॥ कान्यकुब्जभाषायां वसन्ततिलका यथा, कन्दर्परूपजवनेतुजलो न कृष्णासेकोपकामहमही वह्नपीरछोड़ी।

* शशिवदना. P.

तो भेटिके विरहपीरनसा उमारी यें भान्ति द्रूति पठई कठिलातगोपी॥ म्लेच्छसंस्कृतयोः सङ्करे मालिन्यां तथा कस्यचित्, हरनयनसमुत्थज्वालवह्निज्वालाया रतिनयनजलौघैः खाक वाकी वहाया। तदपि दहति चेतो मामकं क्या करोंगी मदनशिरसि भूयः क्या वला आगि लागी॥ एवं गौड़ादिभाषासु तत्तत्सङ्करे चोदाहरणानि ज्ञेयानि। अथ शेषं गाथा इति सामान्यत उपक्षिप्तानि विस्तरभीते विशेषतो नोक्तानि प्राकृतादिषु प्रायः परिदृष्टानि छन्दांसि प्राकृतपिङ्गलशम्भुच्छन्दश्चूडामण्यादिग्रन्थपर्यालोचनया वुत्पित्सुव्युत्पत्त्यर्थमस्माभिरुच्यन्ते। तत्र मात्राच्छन्दःसूपयुक्ता गणभेदाः। तत्र द्विकलौ द्वौ यथा ऽ, ।। त्रिकलास्त्रयः ऽ।, ।ऽ, ।।।. चतुःकलाः पञ्चार्यादिषु संस्थिता इत्यत्र पञ्च मूल एव पूर्वमुक्ताः। पञ्चकला अष्टौ ऽऽ।, ऽ।ऽ, ।ऽऽ, ऽ।।।, ।ऽ।।, ।।ऽ।, ।।।ऽ, ।।।।।. षट्कलास्त्रयोदश यथा, ऽऽऽ, ऽऽ।।, ऽ।ऽ।, ऽ।।ऽ, ।ऽ।ऽ, ।ऽऽ।, ।।ऽऽ, ऽ।।।।, ।ऽ।।।, ।।ऽ।।, ।।।ऽ।, ।।।।ऽ, ।।।।।।. एतेषां व्यवहारार्थं संज्ञास्तास्ताः कृतास्ता अत्यन्तोपयोगाभावात् द्विककलादिशब्दैरेव व्यवहारसिद्धेर्ग्रन्थ विस्तरभयान्नोच्यन्ते। गौरवात् षट्कलस्य * हरि-शशि, † सूर्य-शक्र-शेष-अहि-कमल-ब्रह्म ‡ कलि-चन्द्र-ध्रुव-धर्म- ‖ शालि-करसंज्ञाः॥ अथ गाथाप्रकरणम्। तत्र चतुःपञ्चाशद्भिर्मात्राभि गाथः, सप्तपञ्चाशद्भि गाथा, विपरिताईघटिताभिस्ताभिरेव विगाथः, षष्टिमात्र उद्गाथः, द्विषष्टिमात्रा गाहिनी, सैव विपरीतार्धा सिंहिनी द्विषष्टिमात्रा, चतुःषष्टिमात्राभिः स्कन्धकमिति सप्त भेदाः॥ तत्र यदाऽर्धद्वयेऽपि सप्त सार्धा श्चतुर्मात्रिका गणाः षष्ठगणास्त्वेककलचतुर्थरूपस्तदा गाहः॥ अत्र उदाहरणम्। चन्दो चन्दणहारो तावअ रूअं पआसन्ति। चण्डेसरस्स कीत्ती जावअ अप्पं न दंसेइ। संस्कृते त्वियमुपगीतिः। आर्येव प्राकृते गाथा उदाहरणं ममैव प्रागुक्तम्। तदुक्तम् 'पढमं वारह मत्ता वीराअट्ठरहेइसंजुत्ता, जह पढमं तह तीअं दहपञ्चविहूसिआ गाहा'॥ इति। तत्र यदि सप्तविंशति गुरवस्त्रयश्च लघव

---

* हर † स्मूर ‡ किंणिवन्म ‖ शाली, चर, प्रा० पि०,

इत्येवं त्रिंशदक्षरा तदा लक्ष्मीनाम्नी। षड्विंशति गुरवः पञ्च लघव स्तदा ऋद्धिः। एवमेकैकगुरुपञ्चाशल्लघुपर्यन्तमेकैकगुरुह्रासे लघुद्वयद्वयवृद्धौ च त्रिंशदक्षरकं भेदमारभ्य षट्पञ्चाशदक्षरभेदपर्यन्तं सप्तविंशति भेदाः। क्रमेण तन्नामानि :—लक्ष्मी-ऋद्धि-बुद्धि-लज्जा-विद्या-क्षमा-गौरी-देही-रात्रि-पूर्णा-छाया-कान्ति-महामाया-कीर्त्ति-सिद्धा-मानी-रामा-गाहिनी-विश्वा-वासिता-शोभा-हरिणी-चक्री-सारसी-कुररी-सिंही-हंसीति (२७)। त्रयोदशलघुपर्यन्तं विप्रा, तत एकविंशतिलघुभि क्षत्रिया, ततः सप्तविंशतवधि लघुभि वैश्या, ततः सर्वा शूद्रेति गाथाजातिः। गाथान्तर्गतेनैकेन जगणेन कुलीना गाथा भवति, द्वाभ्यां कुलटा, बहुभि र्वेश्या, जगणरहिता रण्डा। तत्रापि या प्रथमादिविषमादिस्थाने जगणयुक्ता सा गुर्विणीति संज्ञिता कर्त्तु र्नायकस्य च दुष्टा भवति। सर्वासां गाथानां प्रथमपादो हंसीवन्मन्थरः पठनीयः, द्वितीयः सिंहविक्रमवदुद्धतः, तृतीयो गजगतिवल्ललितः, चतुर्थः सर्पगतिवच्चञ्चल इति। गाथाद्वितीयार्धं यदि प्रथमं प्रथमञ्च द्वितीयं तदा विगाथः। इयं संस्कृते उद्गीतिः। यथा, परिहर माणिणि माणं पेक्खहि कुसुमाइ णीवस्स। तुम्ह कए खरहिअअ गेण्हइ गुलीआ धणुइ किर कामो॥ तथा द्वयोरप्यर्धयोः त्रिंशन्मात्रा गाथा प्रथमार्धवद् यदि भवति तदोद्गाथः। यथा, सोऊण जस्स णामं अंसूणआणाइ सुमहि रुइन्ती। भण वीर चेइवइ णो पेच्छामि मुहं कहं जदिच्छं से। इयमेव संस्कृते गीतिः। तथा पूर्वार्धं त्रिंशन्मात्रा गाथावत् उत्तरार्धं एकगुर्वाधिक्येन द्वात्रिंशत् तदा गाहिनी। अर्धवैपरीत्ये च सिंहिनी। क्रमेणोदाहरणे॥ मुञ्चहि सुन्दरि पाअं अप्पहि हसिऊण सुमुहि वाहं मे। कप्पिअ मेच्छसरीरं पेच्छिइ वआणाइ तुम्ह धुअ ह वीरो॥ वरिसइ कणअहविट्ठिं तप्पइ भुअणे दिआणिसं जागन्तो। णीसङ्के साहसङ्को णिन्दइ इन्दं अ सूरविम्बं अ॥ एते संस्कृते ललितावत्ता गीतिसंज्ञे। तथा अर्धद्वयेऽपि चतुर्मात्रिकाष्टगणघटितं स्कन्धकं

* सेतुकाव्ये यथा। जं जं आणेइ गिरिं रइरअचक्कपडिअट्ठसच्छं हणुमा तं तं लीलाइ णलो वामकरुत्थोम्बिअं रएइ समुद्दे॥ इदमेव संस्कृते आर्या गीतिः॥ अत्र यद्यष्टाविंशति र्गुरवः अष्टौ लघवस्तदा नन्दसंज्ञा। तत्र एकगुरुपर्यन्तलघुपर्यंतम् एकैकगुरुह्रासे लघुद्वयद्वयवृद्धौ चाष्टविंशतिभेदाः। तेषां क्रमेण संज्ञाः :—नन्द-भद्र-शेष-सारङ्ग-शिव-ब्रह्म-वारण-वरुण-नील-मदन-तालङ्क-शेखर-शर-गगन-शरभ-विमति-क्षीर-नगर-नर-स्निग्ध-स्नेहन-मदकल-लोभ-शुद्ध-सरित्-कुम्भ-कलश-शशधराख्याः। तत्र नन्दोदाहरणम्। चन्दा कुन्दा कासा हारा हंसा तिलोअणा केलासा। जेता जेता तेता सेता कासीस जिणिआ ते रिसि किती। एवमन्येष्वपि भेदेषु ज्ञेयम्। इति गाथाप्रकरणम्॥

अथ दोहा। यस्याः प्रथमतृतीययोः पादयोः प्रथमं षट्कलो गणस्ततश्चतुष्कलस्ततस्त्रिकल इत्येवं त्रयोदश मात्राः, द्वितीयचतुर्थयोः षट्कलचतुष्कलौ समानौ त्रिकलस्थाने एको लघुरितेत्रकादशमात्रा स्तदिदमष्टाचत्वारिंशन्मात्राभि र्दोहाच्छन्दः। यथा, सुरतरुसुरहीपरसमणि ण हि वीरेससमाण। ओ पुण वक्कलकटिणतणओ पसुओ पाखाण। अत्र द्वाविंशति र्गुरवश्चत्वारो लघवो यत्र तद् भ्रमरम्। तत एकगुरुपर्यन्तमेकैकगुरुह्रासे लघुद्वयद्वयवृद्धौ त्रयोविंशति र्नामानि। यथा, भ्रमर-भ्रामर-शरभ-श्येन-मण्डूक-मर्कट-करभ-नर-मराल-†मधुकल-पयोधर-‡वल-वानर-त्रिकल-कच्छप-मत्स्य-शार्दूल-अहिवर-व्याघ्र-विडाल-श्व-उन्दर-सर्पेति॥ सर्पे अष्टाचत्वारिंशल्लघव एव। तत्र भ्रमरोदाहरणम्। जा अद्धङ्गे पव्वई सीसे गंगा वासु। जो देआणं वल्लहो वन्दे पाअं तासु। तत्रापि द्वादशावधिलघुका विप्रा। ततो द्वाविंशत्यवधिका क्षत्रिया। द्वात्रिंशदवधिलघुका वैश्या। इतरा शूद्रेति। तत्र यस्याः प्रतिपादं प्रथमे तृतीये च चरणे जगणः सा दुष्टा दोहेति। इति दोहाप्रकरणम्॥

---

* सेतुबन्धकाव्ये इति रविकरः।

† मदगन्धः प्रा॰ पि॰. ‡ चल प्रा॰ पि॰.

अथोत्कृष्टा। प्रथमं चतुष्कलौ द्वौ गणौ ततस्त्रिकल एकः एवमेकादशमात्रारचितपादषट्कयुक्तोत्कृष्टा। तत्रापि सर्वैर्लघुभिर्लौहाङ्गिनी नाम। ततश्चतुश्चतुर्गुरुवृद्धौ अष्टाष्टलघुह्रासे दशपर्यन्तं हंसप्रादीनि। लौहाङ्गिनी लघवः ६६, हंसी ४ गुरु लघवः ५८, रेखा गु ८ ल ५०, तालङ्की गु १२ ल ४२, कम्पी गु १६ ल ३४, गम्भीरा गु २० ल २६ काली गु २४ ल १८, कालरुद्राणी गु २८ ल १०, एवमष्टौ भेदाः। तत्र लौहाङ्गिनी यथा, विसुह चलिअ रण अचलु परिहरिअ हअगअवलु। हलहलिअ मलआणिवइ जसु जस तिहुअण पिवइ। वरणसिणरवइ लुलिअ सउलु उपरि जस फुलिअ। एवं सर्वपृथ्व्यामितुग्रत्कृष्टा॥

अथ रोला। यथेच्छं गुरुलघुभिश्चतुर्विंशतिमात्राः प्रतिचरणं भवन्ति एवं पादचतुष्टययुता रोला। यथा, पअभरदरमह धरणी तरणि धजधुलिहि रुम्पिअ, कमटपीठ ढरपड़िअ मेरुमन्दरगिरि कम्पिअ। कोहे चलिअ हम्मीरवीर गअजूहजुत्तो, कट्ठे किअउ हाकन्द मुच्छि मेच्छके पुत्तो॥ अत्र एकादश गुरवो द्वौ लघू यदि पादे तदा रोला शुद्धा। प्रतिपादमेकगुरुह्रासे लघुद्वयवृद्धौ च करतालादिसंज्ञा भेदा द्वादश। यथा, कुन्द-करताल-मेघ-तालङ्क-काल-रुद्र-कोकिल-कमल-इन्द्र-शम्भु-चामर-गणेश्वरेति। इतिरोला॥ अथ * गन्धा॥ प्रथमपादे सप्तदशवर्णाः द्वितीयेऽष्टादश मात्रासु न नियमः द्वितीयार्धमपि तादृगेव सा गन्धा। कम्म चलन्ते कुम्म चलइ पुहविअसरण, कुम्म चलन्ते महि चलइ भुअणभअकरणा। महि चलन्ते महिहरअ तहअ सुरगणा, चक्कवइ चलन्ते चलइ चक्क जइ तिहुअण॥ इति गन्धा। अथ चतुष्पदा। चतुर्मात्राः सप्तगणा गुरुश्चेति त्रिंशन्मात्र एकः पादः तादृशा एवान्ये त्रयः एवं विंशत्यधिकशतं मात्रा भवन्ति। एवं † चतुर्भिः पादैरेकः पादस्तादृशैश्चतुर्भिः पादैश्चतुःशतानि अशीत्यधिकानि मात्राः एतावता चतुष्पदा भवति। तत्र लाघवाय एकपादोदाहरणम्। जसु सीसहि गङ्गा गोरि अधङ्गा गिम पिन्धिअ फणिहारा,

---

*गन्धाना प्रा० पि०. † त्रिंशन्मात्रैः षोडशपादैरिति प्रा० पि०.

कण्ठे ट्ठिअ वीसा पिन्धन दीसा संतारिअ संसारा, किरणावलिकन्दा वन्दिअ चन्दा णअणहि अणल फुरन्ता, सो मङ्गल दिज्जउ वड्डसुख किज्जउ तुम्ह भवाणीकन्ता॥ एतस्यानंताएव भेदाः। इति चतुष्पदा॥ अथ घत्ता। चतुर्मात्रैः सप्तभि र्गणैस्त्रिभि लघुभिश्चैकः पादः। तत्र प्रथमं दशमात्रासु विरतिः ततोऽष्टसु ततस्त्रयोदशसु एवम्प्रकारकपादचतुष्टयेन घत्ता नाम। यथा, रणु दक्ख दक्ख हणु जिणु कुसुमधणु अन्धअगन्धवि-णासकरु,सो रक्खउ संकरु असुरभयङ्करु गोरिनारि अद्धङ्गधरु। इति घत्ता। अथ घत्तानन्दः। षट्कल आदौ ततश्चतुष्कलास्त्रयस्ततः पञ्चकलस्ततः षट्कलः ततो लघुद्वयम्। एवंप्रकारकपदचतुष्टयेन द्विषष्टिमात्रका घत्तो-नन्दः। एकादशसु (सप्तसु) त्रयोदशसु च यतिः। यथा, जे वन्दिअ सिर-गङ्ग हणिअ अणङ्ग अद्धङ्गे परिकर धरणु। सो जोइजनमित्त हरेउ दुरित्त सङ्काहर सङ्करचरणु॥ अथ षट्पदप्रकरणम्॥ काव्यनाम्नः छन्दसः पादचतुष्टयेन उल्लालनाम्नः पादद्वयेन षट्पदं भवति। प्रथमं द्वे मात्रे ततः पञ्च चतुर्मात्रा गणाः ततो द्वे मात्रे इति चतुर्विंशति-मात्राभिः काव्यपदचतुष्टयम्। तत्र एकादशसु त्रयोदशसु च यतिः। उल्लाल-स्याद्ये पादे अष्टाविंशति मात्राः, पञ्चदशसु त्रयोदशसु च यतिः। एवं पदद्वयम् एतादृक् षट्पदम्। यथा, पिंधउ दिढ़सन्नाह वाहउप्पर पक्खर दइ। बन्धुसमदि रण धसउ सामिहम्मीर वअण लइ। उड्डल णभ पह भमउ खग्गा रिउसीस झालउ। पक्खर पक्खर ठेल्लि-पेल्लि पव्वउ अप्फालउ। हम्मीरकज्जे जजल्ल भण कोहाणल मह्म-मह जलउ। सुरताणसीस करवाल दइ तेज्जि कलेवर दिउ चलउ॥ प्रकारान्तरमपि षट्पदे भवति आदौ षट्कलो गण स्तत-श्चत्वारश्चतुःकलास्ततोऽन्ते द्विकलः एवंविधचतुर्भिश्चरणैः षण्णवतिमात्रा भवन्ति। तत उल्लालपदद्वयं पूर्ववदेव। उभयथापि द्विपञ्चाशदधिकं शतं मात्राणां षट्पदे भवति। अत्रोदाहरणम्। जहा सरअससि-बिम्ब जहा हरहारहंसा ठिअ। जहा फुल्लसिअकमल जहा सिरिखण्ड-

खण्ड दिग्र। जहा गङ्गकल्लोल जहा ए सोधिग्र कण्ठइ। जहा डुण्डवर-सुण्डफेण फम्फाइत लुण्ठइ। पिग्रपाग्रपसाग्रदिट्‌ठिपलु णिडुग्र हसइ जहा तरुणिजण। वरमन्ति चण्डेसर तह तुग्र कित्ति देक्खु हरिवम्भ भणा॥ काव्यस्वरूपन्तु आदावन्ते च षट्‌कलः मध्ये त्रयश्चतुःकलास्तृतीयो जो न्लौ वेति इदं स्वतन्त्रस्य काव्यच्छन्दसः करणे। षट्‌पदे त्वक्ता विधा ज्ञेयाः। काव्यस्य भेदाः पञ्चचत्वारिंशत्। तत्र यत्र षण्णवति र्लघूनां न तु गुरुः स शक्रः। तत एकैकगुरुप्रचयेण लघुद्वयद्वयह्रासे च शम्भ्वाद्या भङ्गान्ता भेदा भवन्ति। तथा च भङ्गे अष्टौ लघवः प्रतिपादमेकादश लघुप्रकारेण समुदिते चतुश्चत्वारिंशच्च गुरवस्ततो न ह्रासः। यथा, शक्र-शम्भु-सूर-गण्ड-स्कन्ध-विजय-दर्प-ताराङ्क-समर-सिंह-शीर्ष-उत्तेज-फणि-रत्नः-प्रतिधर्म-मराल-मृगेन्द्र-दण्ड-मर्कट-अनुबन्ध-वासण्ठ-कठ-मयूर-बध-भ्रमर-भिन्न-महाराष्ट्र-बलभद्र-राज-वलित-मयूख-मत्थान-बलिमोह-सहस्राक्ष-वाल-दर्पित-सरभ-दम्भ-उद्दम्भ-वलिताङ्ग-तुरग-हार-हरिण-अन्ध-भङ्गेति। तत्र शक्रस्योदाहरणम्। जसु कर फणिवइ वलय तरुणिवर तनुमह विलसइ। नयन अनल गल गरल विमल ससहरसिर णिवसइ। सुरसरि सिरिमह वहइ सअलमणदुरितदलणकर। हसिससहरहर हरउ दुरित तुअ दिसउ अभअ वर। षट्‌गणाः शुद्धादौ पङ्ग्वादयो दोषा ग्रन्थातरादवसेयाः, विस्तरभयात्तु न प्रपञ्च्यन्ते। द्वाविंशल्लघ्ववधि काव्यस्य विप्रजातिः, ततश्चत्वारिंशल्लघ्ववधि क्षत्रियजातिः, ततोऽष्टाचत्वारिंशल्लघ्ववधि वैश्यः, अवशिष्टः शूद्र इति जातिभेदः। उल्लाललक्षणम् तु त्रयश्चतुःकला आदौ त्रिकलः षट्‌कलस्ततः चतुष्कलोऽथ त्रिककल उल्लाललक्षणं। तत्र सर्वगुरुः षट्पदो यथा। जाआ जाआ अद्धङ्गे गङ्गा सीसे लोलन्ती, सव्वासा जापूरन्ती सव्वं दुक्खाणं लन्ती। अग्गे आगाआहारा दीसा भासा भासन्ता। वेग्गाला जासं सङ्गे णट्टे दुट्ठा णासन्ता। गान्ता कान्ता उम्मे ताले भूमी कम्पाणो। जा दिट्ठे मोक्खा पाई सो तुम्हाणं सुक्खं दे॥ अथ षट्पदभेदाः। तत्र काव्ये चतुश्चत्वारिंशद्गुरवः उल्लाले च षड्‌विंशतिः एवं मिलित्वा सप्ततिः

गुरवो द्वादश च लघवो यत्र स यद्यशीत्यक्षरो अजयनामा प्रथमो भेदः, ततः सर्वलघुपर्यन्तमेकैकगुरुह्रासे लघुद्वयप्रक्षेपेण एकैकवर्णवृद्धौ एकसप्ततिरजयाद्या भेदा भवन्ति। यथा, अजय-विजय-वलि-वर्ण-वीर-वैताल-वृहन्नल-मर्कट-हरि-हर-ब्रह्म-इन्दु-चन्दन-शुभङ्कर-शाल-सिंह-शार्दूल-कूर्म-कोकिल-खर-कुञ्जर-मदन-मत्स्य-सारङ्ग-शेष-सारस-पयोधर-कुन्द-कमल-कारण-शरभ-जङ्गम-शर-सुशर-समर-सारस-सरस-मेरु-सकल-मृग-सिद्ध-बुद्धि-कलकल-कमलाकर-धवल-स्तनक-ध्रुव-वलय-किन्नर-शक-जन-मेधाकर-ग्रीष्म-गरुड़-शशि-सूर्य-शल्य-नर-तुरग-मनोहर-गगन-रत्न-नव-हीर-भ्रमर-शेखर-कुसुमाकर—दीप-शङ्ख-वसु-शब्दाः॥ तथा अजये वर्णाः ८२, गुरवः ७० लघवः १२। अन्तेत्र शब्दे लघवः १५२। इति षट्पदप्रकरणम्।

प्रतिपादं चत्वारः चतुष्कला गणास्तत्रान्तिमो जगण एव एवं चतुर्भिः पादैश्चतुःषष्टिमात्रं पज्झटिकाच्छन्दः। यथा, जेजे गज्जिअ गउड़ वइ एउ, उद्दण्डउडज सभअ पराउ। उरुविक्कमविक्कमजणिअजरू, ताकण परक्कम कोइ ण वुज्झ। इति पज्झटिका॥ प्रतिपादं षोड़शमात्राः अन्ते च मात्राद्वयं लघुद्वयात्मकं पादे चेत् जगणो न भवति तच्छन्दः अलिल्लिहसंज्ञम्। यथा, जहि आसामविदेहा किल्लउ, सुथिर डाहररज्जा जिणि लिउ। कालिञ्जर जिण्हि कित्ती थप्पिअ, धण आरज्जिअ धम्मे अप्पिअ॥ इत्यलिल्लिहः। अनियतगुरुलघुकमाः षोड़शमात्राः प्रतिपादं भवन्ति, तच्चतुःषष्टिमात्रं पादाकुलकं। पञ्चदशमात्राभिः प्रथमतृतीयपञ्चमपादाः पञ्चदशमात्राः, द्वितीयो द्वादशमात्राः, चतुर्थे एकादशमात्राः एवमष्टषष्टिमात्रा भवन्ति। एतदनन्तरं दोहाच्छन्दः समस्तमिलित्वं नवपदं छन्दो रड्डा नाम। तत्र विषमपादेषु आदौ त्रिकलस्ततस्त्रयश्चतुष्कलाः, तत्रापि प्रथमेऽन्ते जगण श्चतुर्लघु र्वा, तृतीयपञ्चमयो र्भगणोऽन्ते द्वितीयपादे सर्वलघ्वन्तास्त्रयश्चतुष्कला वा, चतुर्थे द्वौ चतुष्कलौ ततस्त्रयो लघव इति। तत उक्तलक्षणं दोहाच्छन्दः। यथा, भमइ मज्ञअर फुल्लअरविन्द, णवकेसुकाणणपुलिअ। सव्वदेस पिक एउ सुणिअ, सिअलपवण लज्झ वहइ,

मलयकुहरणउवल्लि पेल्लिअ। चित्त मणोभउ सर हणइ, दूर दिगन्तर कन्त। के परि अप्पउ वारिहउ, ए परिमिलिअ दुरन्त॥ एतद्भेदाः सप्त। तत्र (प्रथमतृतीयपञ्चमपादेषु चतुर्दशमात्रा कलभी १॥ द्वितीयचतुर्थयोरेकादश सा नन्दा २॥ प्रथमतृतीयपञ्चमपादेषूनविंशतिः द्वितीयचतुर्थयोरेकादश सा मोहिनी ३॥) विषमपादेषु पञ्चदश समयोरेकादश सा चारुसेनी। ४। विषमेषु पञ्चदश समयो र्द्वादश सा भद्रा ५॥ विषमेषु पञ्चदश द्वितीये द्वादश चतुर्थे एकादश स राजसेनः। ६। विषमेषु षोड़श समयोरेकादश द्वादश वा सा तालङ्किनीति। ७। इति नवपदप्रकरणम्। अथ पद्मावती। द्विगुरुरन्त्यगुरुरादिगुरुः सर्वलघुरितेत्रैः चतुर्मात्रो गणो यथासम्भवं गणाष्टकघटितपादचतुष्टया पद्मावती। अत्र जगणो नायकपीड़ादिदोषदाता अतश्चण्डाल इतुत्रचत्रतेऽतो न शुभः। यथा, भअभञ्जिअ वङ्गा भग्गु कलिङ्गा तेलङ्गा रण मुक्कि चले। मरहट्ठ ठिआलग्गिअ कट्ठा सोरट्ठा भअपअपाअ पले। चम्पा रणकम्पा पव्वअ कम्पा ऊत्थाऊत्थि जीऊ हरे। कासीसरराणा किअउपआणा विज्जाहर भण मन्तिवरे। इति पद्मावती। पूर्वोक्ताया दोहाया यदेत्रकमर्धमपरञ्चार्धं पूर्वोक्तलक्षणकाव्येन युक्तं तदिदं चतुश्चत्वारिंशदधिकशतमात्राभिः शृङ्खलायमकानुप्रासवत् गुणालङ्कारवत् कुण्डलिकाख्यं छन्दः। अत्र चाविरमत्र कुण्डलिकारेण पठनात् कुण्डलिकेति संज्ञा। यन्मते दोहा द्विपदा तन्मतेनेयं षट्पदा, यन्मते दोहा चतुष्पदा तन्मते कुण्डलीकाऽष्टापदेति। यथा, ढोल्ला मारिअ ढिल्लिमह मुच्छिअ मेच्छसरीर। पुर जज्जल्ला मन्तिवर चलिअ वीर हम्मीर। चलिअ वीर हम्मीर पाअभर मेइणि कम्पइ। दिग मगणह अन्धार धूलि सूरह रह झम्पइ। दिग मगणह अन्धार आण खुरसाणक ओल्ला। दमलि दअसु विपक्ख मारू ढिल्ली मह ढोल्ला। इति कुण्डलिका। यत्र प्रतिपादे विंशत्यक्षराणि पञ्चविंशतिश्च मात्राः तत्रापि प्रथमश्चतुर्मात्रिको गणः, अन्ते एको गुरुः, मध्ये यथासुखमिश्रिता गुरुलघवो स मदनान्तकः। यथा, भञ्जिअ मलअचोलवइ अ चलिअ गञ्जिअ गुज्जरा। मालवराअ मलअ-

गिरिअ लुक्कि परिहरि कुञ्जरा। खुरसाणा खलिअ रणमह मंहिअ लङ्घिअ साअरा। हम्मीर ह चलिअ हारव पलिअ रिउगण काअरा॥ इति मदनान्तकः॥ आद्यन्तयोः षट्कलो गणो मध्ये चतुष्कलाश्चत्वारः एवंविधपदद्वयरचिता द्विपदी। आदौ षट्कलस्ततः पञ्च चतुष्कलास्ततो गुरुरिति वा॥ यथा, दाणउ देउ वेविट्ठकन्तउ गिरिवरसिहर कम्पिउ। हअगअपाअधाअ उट्ठन्तऊ धूलिहि गअण रुम्पिउ॥ इति द्विपदी। नव चतुर्लघवस्ततो रगण एवं दशभि र्गणैरेकोनचत्वारिंशद्वर्णैरेकचत्वारिंशन्मात्राभिरर्धं यस्याः सा खञ्जा द्वितीयमप्यर्धं तादृक्। यथा, महि ललइ अहि पलइ गिरि चलइ हर खलइ ससि घुमइ अमिअ वमइ भम जिविअ उट्ठए। पुणु धसइ पुणु खसइ पुणु ललइ पुणु चलइ पुणु घुमइ अमिअ वमइ विविहपरि दिट्ठए। इति खञ्जा। यत्र प्रथमार्धे षट् चतुर्लघवः द्वितीयार्धे सप्त उभयोरप्यन्ते जगणो भवति सा शिखा। यथा, फुलिअमहुभमरबहु रअणिपहुकिरणबहु अवअरु वसन्त। मलयगिरि कुसुमधरि पवणवहु सहव णहु सइ भण णिज ण हु हु कन्त॥ इति शिखा॥ आद्यार्धे नव चतुर्लघवस्ततो रगणास्ततो द्वौ गुरू इत्येवं पञ्चचत्वारिंशन्मात्राः गाथोत्तरार्धेन द्वितीयार्धं सैषा माला॥ यथा, वरिस जल भमइ घण मलअसिअल पवण मणहरण कणअपिजरिणिचइ विज्जुरि फुल्लिआ णीवा। पत्थरविच्छर हिअलापिअला णहआलं ण आवेइ॥ इति माला। यदि दोहाच्छन्दसि प्रत्यर्धं लघुगुरुलघुद्वयरूपाः पञ्चकला अधिका दीयन्ते, तथा दोहाच्छन्दसो मात्राः ४८ अधिकाश्च १०, एवं अष्टपञ्चाशन्मात्रा भवन्ति तदा चूलिका नाम च्छन्दः॥ यथा, राआ लुद्धसमाज खल वहुकरिहारिणि सेवक धुत्तउ। जीवण चाहसि सुखे जइ परिहर घरजणवहुरणजत्तउ। इति चूलिका॥ व्यस्तार्धो दोहैव सोरट्ठा। यथा, सो माणि पुणमन्त, जासु भत्त पण्डिअ तनअ। जासु घरिणि गुणमन्ति सो वि पुहवि सगाहणिलअ॥ इति सोरट्ठा॥ सगणभगणचतुर्लघवो गणा गुरुश्चैको यत्र प्रतिपदं एकादशाक्षरश्चतुर्दशमात्रकश्च स काहलिः॥

यथा, उच्चउत्थाणअ विमलघरा, तरुणी गेहिणि विणअपरा। पुण विक्कब्भ-पुरलमुद्दरा बलिसा संमअसुखहकरा॥ इति काहलि:। यत्र जगणान्तौ चतुर्मात्रौ प्रतिपादं तन्मधुभारतम्॥ यथा, जसु चन्द सीस पिन्धन इ दीस सो सम्भु पेउ महासुख देउ॥ इति मधुभारतम्। यत्र पादे जगणान्ता एकादश मात्राः स आभीरः। यथा, सुन्दरि गुज्जरणारि लोअण दीह वि-सारि। पीणउत्थनअभार लुल्लइ मोतिहार॥ इत्याभीरः। चत्वारश्चतुर्मात्रास्ततः षण्मात्रस्ततश्चतुष्कलौ गुरुश्चेति द्वात्रिंशन्मात्रा यदोदृण्डकाहलः सर्वा अस्मि-न्मात्राः १२८। यथा,राअह भगन्ता दिगन्तलगन्त परिहरि हअगअधररमणी, लोरहिभरुसरवर पह्नु णिअपरिकरु लोटइ पडइ तनु धरणी। पुणु उट्ठइ सम्भरि करदन्तग्गुलिवालतणअकरकमलधरे, कासीसरराआ णेह लुकाआ कर माआ पुण यप्पि धरे॥ इति दण्डकाहलः। आदौ गुर्वन्तश्चतुष्कलस्ततो गुर्वन्तः पञ्चकल स्तत एको लघुरित्येवं पादघटितं दीपकम्॥ यथा, जसु हत्थ करआल विपक्खकुलकाल। सिरसे ह वरछत्त सम्पुण्ण स सिमन्त॥ इति दीपकम्। यत्रादौ चतुष्कलसगणौ ततः षट्कला गुरुश्चेति षोडशमात्रापादः सिंहावलोकः। यथा, हणु उज्जरगुज्जरराउदलं दरमल्लिअ वल्लि मरहट्ठबलम्॥ बलमोलिअ मालअराअकुला कणु उज्ज कुलच्छवि करमफुरो॥ इत्यलम्॥

इति श्रीमद्भट्टरामेश्वरसूरिसूनुनारायणभट्टरचितायां वृत्तरत्नाकरव्याख्यायां पञ्चमोऽध्यायः॥

---

एवं समादिवृत्तत्रयमभिधायेदानीं तेषामुत्पत्तिप्रदर्शनाय अनुक्ता-नां च वृत्तानां कविप्रयोगेषु दृश्यमानानां सद्भावोपपत्तये प्रस्तारादयः षट्प्र-त्ययाः व्याख्यातव्याः। प्रतीयते संख्यादिकमेभिरिति प्रत्ययाः। सम्भावि-तेषु वृत्तेषु विश्वासापरपर्यायप्रत्ययख्यापकत्वाद्वा। ते च प्रस्ताराद्याः षट् तदुक्तम्।

प्रस्तारो नष्टमुद्दिष्टमेकद्व्यादिलगक्रिया ।
सङ्ख्यानमध्वयोगश्च षडेते प्रत्ययाः स्मृताः ॥ १ ॥

तत्र नष्टोद्दिष्टादीनां प्रस्तारज्ञानाधीनत्वात्प्रस्तारं तावदाह ।

पादे सर्वगुरावाद्याल्लघुं न्यस्य गुरोरधः ।
यथोपरि तथा शेषं भूयः कुर्यादमुं विधिम् ॥ २ ॥

प्रस्तारवृत्तिजातिपादस्थवर्णसंख्याकसर्वगुरौ पादे लिखिते सति तत्राद्यात् प्रथमाद्गुरोरधो लघुं स्थापयेत् तृतीयभेदानुपपत्तेः । तं लघुं न्यस्य यथोपरिपंक्तौ तथैवाधस्तनाधस्तनपंक्तौ शेषपादे वर्णसंख्यापूर्त्यवधि द्वितीयादिकं गुरुं लघुं वा लिखेत् यत्रोपरिगुरुस्तत्राधस्तादपि गुरु र्यत्रोपरिलघुस्तत्राधस्तादपि लघुरित्यर्थः । भूयः पुनरमुं पूर्वोक्तं विधिं लेखनरूपं कुर्यात् तृतीयादिपंक्तौ गुरुमध्ये आद्यगुरोरधो लघुः शेषं चोपरिवदेवेत्यर्थः । एवं सति तृतीये भेदे आद्यस्थानत्वात्, तत्र किं लेख्यमित्यत आह ।

ऊने दद्याद् गुरूनेव

ऊने न्यूने स्थाने गुरूनेव दद्याल्लिखेत् । बहुवचनमुत्तरोत्तरपंक्तावपि न्यूने गुरूणां प्राप्त्यर्थम् । ततश्च भूयः शब्दोऽपि वीप्सार्थे ज्ञेयः । तेन पुनःपुन र्गुर्वपेक्षया आद्यगुरोरधो लघुं लिखित्वा शेषमुपरिवदेव संपाद्य ऊने स्थाने गुरवो देया इत्यर्थः । प्रस्तारकरणेऽवधिमाह ।

यावत् सर्वलघु र्भवेत् ।
प्रस्तारोऽयं समाख्यातश्छन्दोविचितिवेदिभिः ॥ ३ ॥

सर्वलघुपादः प्रस्तारो वा यावद्भवति तावदेव कुर्यात् । प्रस्तार्यतेऽनेन छन्दसि छन्दांसि वा । छन्दोविचितिः छन्दःशास्त्रम् । तदुक्तम् । स्थापयेल्लघुमधो गुरोः पुरः स्याद् यथोपरि तथैव पूरयेत् । पश्चिमं च गुरुभिः पुनःपुनः सर्वलघ्ववधिरित्ययं विधिरिति । तदियमुक्तादौ योजयते । तत्रोक्तायां यथा, ऽ, ।, तस्या द्विकविकल्पत्वात् । अत्युक्तायां यथा, ऽऽ, ।ऽ, ऽ।, ।। (४) । मध्यायां यथा, ऽऽऽ, ।ऽऽ, ऽ।ऽ, ।।ऽ, ऽऽ।, ।ऽ।, ऽ।।, ।।। (८) एते मगणादय एव सिध्यन्ति । चतुरक्षरायां

प्रतिष्ठायां यथा, SSSS, ISSS, SISS, IISS, SSIS, ISIS, SIIS IIIS, ISSI, SSSI, SI SI, SSII, ISII, SIII, IISI, IIII (१६) एव। सर्वेषां समवृत्तानां प्रस्तारे कृते पूर्वपूर्वापेक्षया उत्तरोत्तरस्य द्विगुणा भेदा भवन्ति। अत्र मामक-संग्रहश्लोकः। पादं सर्वगुरुं लिखेत् मुखगुरोश्चाधो लघुं न्यस्य च, चार्यं मूलगुरोः पुन र्लघुमधो शेषं पुनः पूर्ववत्। ऊने न्यस्य गुरून्शेषलघुकं पादं च यावत् पुनः, कार्योऽयं विधिरित्यचीक्लृपदमूं नारायणः प्रस्तृतिम्॥ अर्धसमेषु तु अर्धस्यैव पादतां प्रकल्प्य प्रस्तारः कार्यः, पाद इत्यस्योपलक्षणत्वात्। तदुक्तम्, अर्धसमस्य प्रस्तारेऽर्धप्रस्तार कार्य इति। तद्यथा, द्व्यक्षरपादे च्छन्दसि पादद्वयरूपस्यार्धस्य पादताकल्पनया चतुरक्षरपूर्वोक्तप्रस्तारवत् प्रस्तारे द्व्यक्षरच्छन्दसः षोडश भेदाः। तत्र प्रथमः SSSS, षष्ठः ISIS, एकादश SISI, IIII षोड़शानां भेदानां समवृत्तभेदत्वेनार्धसमभेदत्वात् तान् परित्यज्य शुद्धार्धसमप्रस्तारः सिद्धो भवति। तदुक्तम्, प्रस्तुतभेदकारी विकल्पः प्रस्तरक्रमायातोऽपि वर्जनीय इति। व्याख्यायान्तु गणना कार्यैव। अन्यथा नष्टोद्दिष्टाद्यसिद्धेः। ततश्च द्वादश शुद्धार्धसमभेदाः। यथा, ISSS, SISS, IISS, SSIS, SIIS, IIIS, SSSI, ISSI, IISI, SSII, ISII, SIII, एवमन्यत्रापि योज्यम्। विषमाणां प्रस्तारे पादचतुष्टयात्मकस्य च्छन्दसः पादस्थानीयत्वं प्रकल्प्य प्रस्तारः कार्यः। उक्तं हि विषमप्रस्तारे पादचतुष्टयस्य प्रस्तारः कार्य इति। यथा, द्व्यक्षरस्य विषमवृत्तस्य पादकल्पनायां सर्वगुरोः SSSSSSSS पूर्ववदाद्यगुरोरधो लघुं विन्यस्य यथोपरीति गुरुसप्तकं लिखित्वा भूयः कुर्यादिति द्वितीयप्रस्ताराद्यगुरोरधो लघुः परतो यथोपरीति कृत्वा ऊने गुरून् दद्यात्। एवं सर्वलघुप्रस्तारं यावत् कृते षट्पञ्चाशदधिकं शतद्वयं भेदाः। तेषां मध्ये पूर्ववत् समार्धसमरूपत्वेन प्रस्तुतविषमप्रस्तारभेदकारित्वात् प्रथमः द्वितीयाच्च सप्तदशः सप्तदशोऽन्त्यं यावद्वर्जनीयाः। ते च यथा, प्रथमः SSSSSSSS, अष्टादशः ISSS ISSS, पञ्चत्रिंशः SISSS ISS, द्विपञ्चाशः IISS IISS, एकोनसप्ततिः SS ISSS IS, षड़शीतिः ISISISIS,

त्र्यधिकशतं ऽ ।।ऽऽ।।ऽ, विंशत्यधिकशतं ।।। ऽ।।। ऽ, सप्तविंशदधिकशतं ऽऽऽ। ऽऽऽ।, चतुःपञ्चाशदधिकशतं। ऽऽ ।। ऽऽ ।, एकसप्ततुत्तरशतं ऽ। ऽ। ऽ। ऽ। अष्टाशीत्यधिकशतं ।। ऽ ।।। ऽ ।, पञ्चोत्तरद्विशतं ऽऽ ।। ऽऽ ।।, द्वाविंशतुत्तरद्विशतं । ऽ ।।। ऽ ।।, एकोनचत्वारिंशदधिकद्विशतं ऽ ।।। ऽ ।।।, षट्पञ्चाशदधिकद्विशतसंख्या ।।। ।। ।।।—एवं षोड़श। एषां मध्ये प्रथम ऽऽऽऽऽऽऽऽ, षष्ठ। ऽ। ऽ। ऽ। ऽ, एकादश ऽ। ऽ। ऽ। ऽ।, षोड़शः ।। ।। ।। ।। समभेदाः। अनेन द्वादशार्धसमभेदाः। शेषाः चत्वारिंशदधिशतद्वयं शुद्धविषमभेदाः। एवं सर्वत्र विषमेषु प्रस्तारभेदः ज्ञेयः। मात्राप्रस्तारे तु उपरिपंक्तौ यथायोग्यं मात्राद्वयद्वयस्थाने एकैकगुरुक्रमेण गुरून् लिखित्वा प्रथमगुरोरधो लघुं लिखित्वा शेषमुपरि पंक्तिवत् कुर्यात्। एवं सतेत्रका मात्रा न्यूना भवति सा लघोः पूर्वं लघुरूपेण देया। तृतीयपंक्तौ प्रथमगुरो लघुं दत्वा शेषमुपरिवल्लिखित्वा न्यूनास्तिस्रो मात्राः ता लघुगुरुरूपेण लघोः पूर्वं देयाः। एवं क्रमेणाद्यगुरोरधो लघौ दत्ते उपरिवच्छेषे लिखिते शेषा मात्रिका चेदाद्यलघोः पूर्वं लघुरूपेण देया। द्वे चेच्छेषे तदा तत एव पूर्वं गुरुरूपेणैव। एवं युग्मा गुरुरूपेणैवेति। तिस्रश्चेत्तदा एको लघुरेको गुरुश्चेति, पञ्च चेत्तदा एको लघु द्वौ गुरू चेतेत्रव क्रमेण सर्वलघुप्रस्तारपर्यन्तं लिखेत्। अत्रैवं लिखिते पूर्वोक्तषट्कलत्रयोदशगणप्रस्तारो यथा, ऽऽऽ, ।। ऽऽ, । ऽ । ऽ, ऽ ।। ऽ, ।।।।ऽ, ।ऽऽ ।, ऽ । ऽ ।, ।।। ऽ ।, ऽऽ ।।, ।। ऽ ।।, । ऽ ।।।, ऽ ।।।।, ।।।।।। (१३)। पञ्चकलस्य सर्वगुरुभेदाभावादादिलघ्वाद्या एव भेदाः। यथा, ।ऽऽ, ऽ ।ऽ, ।।।ऽ, ऽऽ ।, ।।ऽ।, ।ऽ ।।, ऽ ।।।, ।।।।।, एवमन्यत्रापि। विषमकलप्रस्तारेष्वादौ लघुं दत्वा प्रस्तारः कार्य इति ॥-॥

अथ प्रस्तारशोधनोपयोगि नष्टमाह ॥

नष्टस्य यो भवेदङ्कस्तस्यार्धेऽर्धे समे च लः।

विषमे चैकमाधाय स्यादर्धेऽर्धे गुरु र्भवेत् ॥ ४ ॥ इति।

अङ्क इत्यतः परं तत्रेत्यध्याहार्यम्। ततश्च नष्टस्य वृत्तस्य योऽङ्क स्तत्र समे सति लो लघु र्लेख्यः, तस्य चार्धेऽर्धे कृते अर्धाङ्के समे सति लघुः

विषमे त्वर्धे करणात्मकरेकमधिकं क्षिप्त्वाऽर्धयेत् नष्टस्य अङ्के विषमे सति गुरु र्भवेल्लेख्य इत्यर्थः, तदनन्तरं तस्मिन् विषमे एकमधिकमाधाय संयोजय योऽङ्को जात स्तस्यार्धे विषमे सति गुरुः समे तु लघुः तस्मिन्नप्यर्धे विषमे गुरुः समे लघुरित्येवं विवक्षितनष्टवृत्ताक्षरसंख्यापूरणं यावत् कुर्यात्। अर्धेऽर्धे इत्युभयत्र वीप्सया पुनः पुनः करणं सूचितम्। यथा त्र्यक्षरे प्रस्तारे पञ्चमं वृत्तं कीदृगिति प्रश्ने कृते पञ्चमाङ्कस्य विषमत्वाद् गुरुं विन्यस्य सैकार्धे अङ्कस्य विषमत्वाद् गुरुरेव। पुनः सैकस्यार्धे अङ्कस्य समत्वाल्लघुरिति। यथा, ऽऽ।. सोऽयं पञ्चमस्तगणः। समोदाहरणं यथा, चतुरक्षरप्रस्तारे चतुर्थं वृत्तं कीदृगिति प्रश्ने समत्वाल्लघुस्तदर्धे अङ्के द्व्यङ्के पुन र्लघुः शिष्टेऽर्धितद्व्यङ्के एकस्यासमत्वाद् गुरुः शिष्टैकाङ्के सैकेऽर्धिते पुन र्गुरु र्यथा,।। ऽऽ. एवं सर्वत्र प्रथमे भेदे प्रथमाङ्कस्य विषमत्वात् सैकार्धतायामपि विषमत्वात्सर्वगुरुता॥ अर्द्धसमानान्तु नष्टे पूर्वोदाहृतद्व्यक्षरपादार्धसमप्रस्तारे पञ्चमो भेदः कीदृगिति प्रश्ने पञ्चानां विषमत्वाद्गुरुः सैकेऽर्धे त्रयाणां विषमत्वात्पुनर्गुरुः सैकेऽर्धे द्वयोः समत्वाल्लघुः द्वयोरर्धे विषमत्वाद्गुरुरिति सिद्धमर्धम् ऽऽ।ऽ. द्वितीयार्धेऽप्येवमेव। अत्र यदि समार्धसमयोः संकृष्टत्वं तदा पञ्चमत्वं, यदा तु शुद्धार्धसमगणना तदा प्रथमस्य सर्वगुरोः समत्वात् त्यागे चतुर्थता। नष्टसिद्धिस्तु संवलितसंख्ययैवेत्युक्तं प्राक्, एवं सर्वत्रापि। विषमाणां नष्टे तु द्व्यक्षरविषमवृत्तस्य चतुर्थो भेदः कीदृगिति प्रश्ने उक्तविधाने ।।ऽऽऽऽऽऽ अयं चतुर्थः। अत्रापि समार्धसमसङ्कलनेन चतुर्थता, शुद्धविषमभेदेषु तु प्रथमस्य समार्धसमतयासक्तत्वात्तृतीयता। एवं सर्वेषु हि समविषमेषु योज्यम्। अत्र मदीयः संग्रहश्लोकः। दृष्टाङ्के विषमे समे गुरुलघू युग्मे तथैकाधिका युग्मे द्वे विषमे समे गुरुलघू भूयोऽवशिष्टेऽर्धिते। तद्वत्प्रश्नविवक्षितान् गुरुलघून् यावद्विदध्यादिदं श्रीरामेश्वरभट्टसूनुरकरोन्नष्टे विधामीदृशीम्। अथ मात्रावृत्ते नष्टम्। तत्र लाघवार्थं षष्ठमात्रप्रस्तारे उदाहरणमुच्यते। षण्मात्रप्रस्तारेषु सप्तमस्थाने कीदृशो [गणोऽस्तीतिप्रश्ने षडपि कलास्तावत् पृथक् स्थापनीयाः। तत्र प्रथमकलोपर्येकाङ्को देयः,द्वितीय-

कलाया द्व्यङ्क एव, एकाङ्कात् पूर्वं कस्यचिदङ्कस्याभावेनैकीकरणासम्भवात् एककलोपर्यङ्कं द्वितीयकलोपर्यङ्कं चैकीकृत्य त्र्यङ्कं तृतीयकलोपरि, द्व्यङ्क-त्र्यङ्कावेकीकृत्य पञ्चाङ्कं चतुर्थोपरि, त्र्यङ्कपञ्चाङ्कावेकीकृत्याष्टाङ्कं पञ्चमोपरि, पञ्चाष्टौ चैकीकृत्य त्रयोदशाङ्कं षष्ठोपरि विन्यसेत्। यथा ॥ १ ॥ २ ॥ ३ ॥ ५ ॥ ८ ॥ १३ ॥॥॥ एवं सर्वत्र पूर्वपूर्वकलाद्वयोपरिस्थाङ्कमेकीकृतत्र परस्परं कलासु न्यसेत्। एवं कृते दृष्टाङ्कमन्तिमकलोपर्यङ्के लोपयेत्। अवशिष्टाङ्केऽव्यवहितपूर्वं पूर्वतरं पूर्वतरमेवाङ्कं यथासम्भवं लुम्पेत्। तत्र यस्य यस्याङ्कस्य लोपो भवति तत्तदधस्तनकलास्वग्रिमकलामादाय गुरुतामेति। एवं यावत् सम्भवं कुर्यात्। प्रस्तुते दृष्टं सप्ताङ्कं त्रयोदशाङ्के विलोप्यावशिष्टषडङ्केऽष्टौ न लुप्यन्त इति पञ्च लोपयेत्, अवशिष्टे एकाङ्के त्रयो द्वौ वा न लुप्येरन् इति एकाङ्कस्य लोपे शून्यता। एवं कृते पञ्चैकाङ्कलुप्तत्वात्तदधस्तने मात्रे चतुर्थप्रथमे पञ्चमद्वितीयमात्रे आदाय गुरुतां गच्छतः। एवं कृते सिद्धः षट्कलः सप्तमप्रस्तारः ऽ।ऽ।· एवं मात्रावृत्तेषु सर्वेषु ज्ञेयम्। बहुङ्कवृद्धिप्रसङ्गात् नोदाहृतमस्माभिः। यदाहुः "नष्टे सर्वाः कलाः कार्या अङ्कन्यासस्तु पूर्ववत्। दृष्टोऽङ्कः शेषके लोप्यः परोऽप्यङ्कोऽत्र लुप्यते। यस्य यस्य भवेल्लोपो व्युत्क्रमेण पुनः पुनः। तदधो गुरुतामेति परया कलया सह" इति। उद्दिष्टस्य रीतेः पूर्वमुक्तत्वात् पूर्ववदिति उद्दिष्टवदित्यर्थः। आर्याया मात्रावृत्तत्वादनया रीत्या नष्टसिद्धावपि तन्मात्रविषयो लघूपाय आर्याप्रकरणे प्रसङ्गादस्माभिरुक्तः॥ अथ प्रस्तारशोधनायोपयुक्तमुद्दिशति।

उद्दिष्टं द्विगुणानाद्यादुपर्यङ्कान् समालिखेत्।
लघुस्था ये च तत्राङ्कास्तैः सैकैर्मिश्रितैर्भवेत् ॥ ५ ॥ इति।

आद्यादक्षरादारभ्योपरि आद्यादेकाङ्कादारभ्य द्विगुणान् द्विगुणानङ्कानुत्तरोत्तरं लिखेत्। तत्र लेखने कृते सति लघुलेखोपरिस्था येऽङ्कास्तैर्मिश्रितैर्यथास्थानं योजितैरेकाधिकेन सहितैरुद्दिष्टं भवेदिति। आद्यद्विगुणशब्दयोरावृत्त्या व्यवहिताम्वयेन च व्याख्येयम्। उपरीत्युपलक्षणमधो लिखनेऽप्यक्षतेः,

यथा, त्र्यक्षरे प्रस्तारेऽन्तगुरु र्भेदः कतिपय इति प्रश्ने न्यासः ।(१) ।(२) ऽ(४) अत्र लघुस्थैकाङ्कद्व्यङ्कमेलने त्रय एकसहिताश्चत्वारो भवन्ति ततश्चतुर्थभेदं कथयेत्।

एवं चतुरक्षरे आद्यन्तगुरुः कतिपय इति प्रश्ने न्यासः ऽ(१) ।(२) ।(४) ऽ(८) अत्र लघुस्थाभ्यां द्व्यङ्कचतुरङ्काभ्यां सैकाभ्यां सप्त भवन्ति, ततः सप्तमोऽयं भेदः। एवं सर्वत्र। अर्धसमेऽपि चतुरक्षरार्धे ऽऽ।ऽ अयं प्रस्तारः किंसङ्ख्याक इति प्रश्ने न्यासः, ऽ(१) ऽ(२) ।(४) ऽ(८) लघुस्थे चतुरङ्के सैके पञ्चमो भेदः समार्धसमसंस्पृष्टतायां, युग्मार्धसमेषु पूर्वन्यायेन चतुर्थः। एवं सर्वत्र। विषमेष्वपि द्व्यक्षरपादकविषमवृत्ते ।।ऽऽऽऽऽऽ अयं भेदः कतम इति प्रश्ने न्यासः यथा, ।(१) ।(२) ऽ(४) ऽ(८) ऽ(१६) ऽ(३२) ऽ(६४) ऽ(१२८) अत्र लघुस्थानैकद्व्यङ्कौ सैकौ चत्वारस्तावत्सङ्ख्याकं समार्धसममेलनेन जानीयात्, युग्मविषमे तृतीयम्। एवं सर्वेषु विषमेषु ज्ञेयम्॥ अत्र संग्रहश्लोकः॥ प्रथमात् द्विगुणानङ्कान् प्रस्ताराद्यादुपर्यधो वाऽसेत्। लघुगैरङ्कैः सैकै र्मिलितैर्वद्दिष्टमुद्दिष्टम्॥ सूत्रे तूद्दिष्टे प्रकारान्तरमुक्तम्॥ यद् वृत्तं जिज्ञासेत्तत्क्रमौ प्रस्तार्य तन्मध्यस्थलघुषु योऽन्त्यो लघुस्तदुपर्यधो वा एकाङ्कं लिखित्वा तत्रैव तं द्विगुणयेत्। ततस्तत्पूर्वस्मिन् गुरौ लघौ वा तमङ्कं द्विगुणितं कृत्वा पूर्ववन् न्यसेत्। यदा त्वेवं प्रकारे क्रियमाणे गुरुमापद्यते सङ्ख्या तदा तन्मध्ये एकं त्यक्त्वा पुनरुत्तरोत्तरं द्विगुणितं कृत्वा गुरुस्थाने एकं त्यक्त्वा पुनर्द्विगुणनादिक्रमेण यावत् प्रस्तारपूर्तिं कुर्यात् एवं कृते या संख्या सम्पद्यते तावतिथं तद्वृत्तं जानीयात्। यथा चतुरक्षरे गुरुलघू द्वौ गुरू चेति वृत्तं कतिथमिति प्रश्ने न्यासः ऽ।ऽऽ अत्र लघुधः संख्याङ्कं द्विगुणयेत् तच्च पूर्वस्माद्गुरोरधो द्विगुणितं चतुरङ्कं विलिख्य गुरुस्थसंख्यात्वादेकं जह्यात्। अवशिष्टत्र्यकस्तावतिथं वृत्तमिति। अत्र मात्रावृत्ते उद्दिष्टम्। उद्दिष्टवृत्त-प्रस्तारं कृत्वा प्रथमकलायां प्रथमाङ्कं दद्यात्, द्वितीयकलायां नष्टन्यायेन द्व्यङ्कं, ततस्तृतीयकलायां एकद्व्यङ्कौ मेलयित्वा त्र्यङ्कं, चतुर्थ्यां द्वित्र्यङ्कं

मेलयित्वा पञ्चाङ्कमित्येवं पूर्वपूर्वाङ्कद्वयमेलनं कृत्वोत्तरोत्तरकलायां न्यसेत् नष्टवत् । गुरौ तु मात्राद्वयस्य वर्तमानत्वादङ्कासङ्करार्थमेकोऽङ्क उपरि देयो द्वितीयस्त्वध इति विशेषः । एवमङ्केषु स्थापितेषु अन्त्यकलायां योऽङ्कस्तन्मध्ये गुरुशिरसि स्थिता येऽङ्कास्तानेकीकृत्य पातयेत्, अवशिष्टाङ्कसंख्यां दृष्टवृत्तस्य जानीयात् । यथा, आद्यन्तगुरुः षट्कलप्रस्तारः कतिपय इति दृष्टे न्यासः

१ ३ ५ ८
ऽ । । ऽ अत्र गुरुशिरसि एकाङ्काष्टाङ्कौ मिलितौ नव तेऽन्त्यकलास्थ-
२    १३

त्रयोदशस्वपनेयाः, अवशिष्टश्चत्वारः । सा सङ्ख्योद्दिष्टप्रस्तारस्य । एवं मात्रावृत्तेष्वपि ज्ञेयम् । तदुक्तं "मात्रायां प्रथमं समोऽङ्क उपरि स्थाप्यो युगायां द्वयं संयुज्यैककयुगौ त्रयं च त्रिकलामूर्ध्नि द्वयेन त्रयम् ॥ एकीकृत्य च पञ्चकं जलनिधावेवं कृते लुप्यते शिरे तद्गुरुमूर्धकाङ्क इह चेद् उद्दिष्टबोधस्तदा ॥" इति । आर्यासु तु तत्प्रकारान्तरमपि तत्प्रकरण एवाभ्यधायि । अथोक्तादिषु सर्वगुर्वेककलघुद्विलघुत्रिलघ्वादिपादकवृत्तकथनद्वारा प्रस्तारशोधनायैकद्व्यादिलगक्रियामाह ।

वर्णान् वृत्तभवान् सैकानौत्तराधर्यतः स्थितान् ।
एकादिक्रमतश्चैतानुपर्युपरि निक्षिपेत् ॥ ६ ॥
उपान्त्यतो निवर्तेत त्यजन्नेकैकमूर्ध्वतः ।
उपर्याद्याद् गुरोरेवमेकद्व्यादिलगक्रिया ॥ ७ ॥

उक्तादिवृत्तनिष्ठान् वर्णान् वर्णसंख्याकानङ्कान् सैकानेकेनाधिकेन सहितानौत्तराधर्येत उत्तराधरभावेन स्थितान् कुर्यादित्यध्याहारः । औत्तराधर्येत इति गुणवचनब्राह्मणादिभ्यः कर्मणि चेति ब्राह्मणादित्वाद्भावे ष्यञ् ततस्तसिः । एतान् पूर्वस्थापितानङ्कानेकद्वित्र्यादिक्रमेणोपर्युपर्यङ्के निक्षिपेत् मेलयेत् । मेल्यमानाङ्कसमसंख्याया उपरि क्षेपो मेलनं न तु स्वस्यैव स्वरूपतः तत्स्थाने शून्यताप्रसक्त्या द्वितीयादिमेलनादृत्तत्रभावापत्तेः । अधस्तनमेकाङ्कं तदुपर्यङ्के मेलयित्वा द्व्यङ्कं कुर्यात्, तं तृतीयैकाङ्के संयोज्य त्र्यङ्कं कुर्यादित्येवमुत्तरोत्तरं कुर्यादित्यर्थः,

उपान्त्यस्याप्यन्त्यमेलने प्रसक्तेऽपवादमाह उपान्त्यत इति। उपान्त्यपर्यन्त-मेलनं कृत्वा तमन्त्येऽमेलयित्वाऽधःप्रत्यावृत्त्यैकैकं त्यजन् निवर्तेत। विरमेत्। अन्त्यश्च प्रथममेलने सर्वोपरितनः, द्वितीयमेलनावृत्तौ तदधोभावी द्वितीयः तृतीयावृत्तौ तदधोभावी तृतीय इत्येवमुत्तरोत्तरो ज्ञेयः। उपान्त्यश्चान्त्या-धोभावी प्रतिमेलनावृत्तकमेकं त्यक्त्वाऽधस्तनान् मेलयेदिति भावार्थः। एकैकमिति वीप्सया सर्वाधस्तनाङ्कपर्यन्तं पुनः पुन मेलनावृत्तिः कार्येत्य-सूसुचत्। सिद्धमाह उपरीति। एवं कृते आद्यात् प्रथमाद्गुरोः सर्वगुरो भेदादुपर्यनन्तरमेकद्वित्र्यादीनां लघूनां क्रिया ज्ञेयेति शेषः। प्रथममेकः सर्वगुरुः तदधस्तनाङ्कसंख्य एकलघुस्तदधोऽङ्कसंख्या द्विलघव-श्चतुर्थाङ्कसंख्यास्त्रिलघवः एवमधोभाव्यङ्कसंख्याश्चतुर्लघ्वादिभेदा ज्ञेया इत्यर्थः। एवं प्रथमः सर्वगुरुः, द्वितीयाङ्के एकगुरवः, तृतीयाङ्के द्विगुरवः, चतु-र्थाङ्के त्रिगुरव इत्यादिप्रकारेण गुरुक्रिया। अत्र त्र्यक्षरे उदाहरणं १. १. १.१. एवं सैकान् वृत्तवर्णसंख्यानेकाङ्कान् न्यसेत् चतुरक्षरे च यथा, १.१.१.१.१. ततोऽधस्तनमेकाङ्कं तदुपरिस्थैकाङ्के संयोज्य द्व्यङ्कं कुर्यात्। यथा त्र्यक्षरे १.१.२.१. चतुरक्षरे च यथा, १.१.१.२.१ द्वितीयं तृतीये मेलयेत्, आद्ये यथा, १.३.२.१. द्वितीये यथा, १.१.३.२.१। तृतीयं चतुर्थे मेलयेत् चतुर-क्षरोदाहरणे १.४.३.२.१। त्र्यक्षरे तु न मेलयेत् उपान्त्यतो निवर्ततेत्युक्तेः। पुनस्त्र्यक्षरेऽधस्तनं द्वितीये मेलयेत् यथा, १.३.३.१. त्र्यक्षरे एतावतैव सिद्धिः, चतुरक्षरे तु अधस्तनं द्वितीये मेलयेत् यथा, १.३.३.४.१. द्वितीयं तृतीये यथा, १.४.६.४.१. ततो मेलनं नास्ति, एवं त्र्यक्षरे एकः सर्वगुरु भेदः त्रय एकलघवस्त्रयो द्विलघवः एकः सर्वलघु-रिति गुरुक्रियायां तु एकः सर्वगुरुस्त्रय एकगुरवः त्रयो द्विगुरवः एकः सर्वल-घुरिति सिद्धम्। चतुरक्षरे एकः सर्वगुरुः ऽऽऽऽ, चत्वार एकलघवः-।ऽऽऽ (१) ऽ।ऽऽ (२) ऽऽ।ऽ (३) ऽऽऽ। (४) षट् द्विलघवः ।।ऽऽ, (१) ।ऽ।ऽ (२) ऽ।।ऽ (३) ।ऽऽ।, (४) ऽ।ऽ। (५) ऽऽ।। (६) चत्वारस्त्रि-लघवः, ।।।ऽ (१) ऽ।।। (२) ।ऽ।।, (३) ।।ऽ।, (४) एकः सर्वलघु ।।।। भेदः॥

एवं गुरुभेदा अपि। एवं सर्वत्र। अर्धसमे तु विशेषः। द्व्यक्षरार्धसमानां षोड़श भेदाः पूर्वोक्तरीत्या तन्मध्ये प्रथमषष्ठैकादशषोड़शांश्चतुरो भेदान् त्याजयेत्। यथा, चतुरक्षरप्रस्तारे एकद्व्यादिलगक्रियायां कृतायां प्रथमान्त्यो त्याज्यौ समत्वात्, षष्ठैकादशौ द्विलघुत्ववृत्तसंख्याबोधके षड़ङ्के त्याज्यौ। एवं कृते न्यासः ४ ४ ४ ततश्चत्वार्येकलघूनि, चत्वारि द्विलघूनि, चत्वारि त्रिलघूनि वृत्तानि इति द्व्यक्षरार्धसमभेदा द्वादश। एवमन्यत्रापि एकद्व्यादिलघुकान् समभेदान् एकद्व्यादिलघुकवृत्तसंख्याबोधकाङ्के पातयित्वा आद्यान्त्यौ च भेदौ त्यक्त्वाऽवशिष्टाङ्कैः एकद्व्यादिलगक्रियार्धसमेषूह्या। विषमेषु तु द्व्यक्षरपादस्य कथ्यते। अष्टाक्षरजातेस्तावदेव लगक्रियायां पूर्वोक्तरीत्या वृत्तायां न्यासः। १। ८। २८। ५६। ७०। ५६। २८। ८। १। अत्र समार्धसमरूपत्वात्प्रस्तारकरणोक्तप्रकारेण षोड़श भेदाः यथास्थानं पात्याः। यथा एकलघवो ह्येयेषु न सन्ति, द्विलघवश्चत्वारस्तदीयेऽष्टा विंशत्यङ्के ह्येयाः, त्रिलघवो ह्येयेषु न सन्त्येव चतुर्लघवः षट्कं सप्तत्यङ्केषु ह्येयाः, पञ्चलघवस्तु न सन्त्येव, षट्लघवश्चत्वारोऽष्टाविंशत्यङ्के ह्येयाः सप्तलघवो न सन्तीति। आद्यन्तौ चैकाङ्कौ त्याज्यौ। एवं कृते द्व्यक्षरविषमस्य एकद्व्यादिलगक्रियाङ्कन्यासः ८।२४।५६।६४।५६।२४।८। अत्राद्येकलघवश्चतुर्विंशतिः द्विलघव इत्यादि पूर्ववत् कथनीयम्। एवमन्येष्वपि विषमेष्वपि ज्ञेयम्। संग्रहश्लोकः "छन्दोवर्णमितानुपर्यधरगान् सैकान् मुखाङ्कान्लिखेदेकैकं शिरसि त्यजन्नधरगानूर्ध्वेषु संयोजयेत्। भेदः सर्वगुरुर्मुखे तदनु चैकद्व्यादिलघ्वन्विता चान्ते सर्वलघुक्रिया लघुगतैवं स्याद् गुरूणामपि॥" भास्कराचार्यैस्तु लीलावत्यां लघुगुरुक्रियायां प्रकारान्तरमभ्यधायि॥ तदुच्यते।—वृत्तपादाक्षरसंख्याकानेकाद्यङ्कानुपरि व्युत्क्रमेण विन्यस्य तदधस्तानेव क्रमेण न्यसेत्। ततोऽधस्तनेन स्वोपरिस्थो भाज्यः, भागेन लब्धेन तदग्रिमो गुण्यः तदधस्तनेन भाज्यः, लब्धेनाग्रिमं गुणयेत् तदधस्तेन भागं हरेत्, इत्येवं यावदङ्कसमाप्ति कार्यं। लब्धाङ्काश्च क्रमेण स्थाप्याः। एवं कृते लब्धाङ्केषु प्रथमेनैकगुरवो ज्ञेयाः, द्वितीयेन द्विगुरव

६·५·४·३·२·१·

इत्यादि ज्ञेयम् । इदं षडक्षरपादे गायत्रीकृते योजयते न्यासः । १·२·३·४·५·६· अत्रैकेन षण्णां भागे लब्धाः षट, षड्भिः पञ्चसु गुणितेषु ३० द्वाभ्यां भक्ते लब्धः १५, एतैश्चतुर्षु गुणितेषु ६० त्रिभि र्भागे लब्धं २०, एभिस्त्रिषु गुणितेषु ६० चतुर्भि र्भागे लब्धं १५, एतैर्द्वयो र्गुणनेन ३० पञ्चभि र्भागे लब्धं ६, एतैरेकस्मिन् गुणितं षडेव षड्भि र्भागे लब्धं १, एतेषां क्रमेण विभक्तानां न्यासः ६।१५।२०। १५।६।१॥ एकगुरवः ६, द्विगुरवः १५, त्रिगुरवः २०, चतुर्गुरवः १५, पञ्चगुरव ६, षट् सर्वगुरुः सर्वलघुरेकः स्वतः सिद्ध एव । एवमन्यत्रापि योजयम् । तदाह्-लीलावतीकाराः "एकाद्येकोत्तरा अङ्का व्यस्ता भाजयाः क्रमस्थितैः । परः पूर्वेण संगुण्यस्तत्परस्तत्परेण च ॥ एकद्वित्र्यादिभेदा स्युरिदं साधारणं स्मृतम् । छन्दश्चित्युत्तरे छन्दस्युपयोगोऽस्ति तद्विदाम् ॥" इति । अथैक-द्व्यादिलघुगुरुक्रियासिद्ध्यर्थमेव सूत्रकारोक्तो मेरुप्रस्तारः ।

तत्र प्रथममेकं चतुरस्रं कोष्ठं लिखेत् । तदध उभयतोऽर्धनिष्क्रान्तं कोष्ठद्वयम् । तदधस्तथैव त्रयम्, तदधस्तथैव चतुष्टयमित्येवं षड्-विंशतिकोष्ठलेखनं यावत्कार्यम् । उपरि कोष्ठे एकाङ्को देयः । तथा प्रतिपंक्ति आद्यन्तकोष्ठेषु एकाङ्क एव, तृतीय-पंक्तौ मध्यमकोष्ठे शून्ये तदुपरिगतकोष्ठद्वयगतौ एका-ङ्कौ एकीकृत्य द्व्यङ्कं न्यसेत्, एवं चतुर्थपंक्तौ मध्यकोष्ठयो रुपरिगतकोष्ठद्वयाङ्कम् एकीकृत्य त्र्यङ्कं, एवं सर्वत्रोपरितनकोष्ठद्व-याङ्कमेकीकृत्याधस्तनकोष्ठे दद्यात् । एवं षड्विंशतिकोष्ठकपंक्ति यावत् कार्यम् ।

१
१ १
१ २ १
१ ३ ३ १
१ ४ ६ ४ १
१ ५ १० १० ५ १
१ ६ १५ २० १५ ६ १
१ ७ २१ ३५ ३५ २१ ७ १
१ ८ २८ ५६ ७० ५६ २८ ८ १
१ ९ ३६ ८४ १२६ १२६ ८४ ३६ ९ १
१ १० ४५ १२० २१० २५२ २१० १२० ४५ १० १
१ ११ ५५ १६५ ३३० ४६२ ४६२ ३३० १६५ ५५ ११ १
१ १२ ६६ २२० ४९५ ७९२ ९२४ ७९२ ४९५ २२० ६६ १२ १

(एवम् यावत् २६ पङ्क्ति पूरणीयम् ।)

तदुक्तम् "आदावेकं लिखेत् कोष्ठं तदधो द्वे च संलिखेत्। तदधस्त्रीणि कोष्ठानि एवं रूपेण वर्धयेत्॥ आदावेकं लिखेत् कोष्ठमेकं मध्यं च पूरयेत्। लेख्यकोष्ठोपरिप्राप्तै रग्रिमाङ्केन संयुतैः॥" इति। अत्रोद्धारप्रकारोऽयं मेरोः। अत्र द्विकोष्ठायां द्वितीयपंक्तौ एकाक्षरपादाया उक्ताया लगक्रिया। तृतीयायां द्वितीयपंक्तौ अत्युक्ताया एवं। इत्येवं क्रमेण षड्विंशति-जातीनां विशेषनिवेशः। स चैकाङ्कोपरिगतप्रतिपंक्तिगद्वितीयकोष्ठस्था-ङ्केन ज्ञेयः। तत्र द्वितीयपंक्तौ एकं सर्वलघु एकं सर्वगुर्वुक्तायाम्। तृतीयपंक्ता-वेकं सर्वगुरु द्वे एकलघुनी एकं सर्वलघ्वित्यत्युक्तायाम्। चतुर्थ-पंक्तावेकं सर्वगुरु त्रीण्येकलघूनि त्रीणि द्विलघूनि एकं सर्वलघ्विति-प्रकारेण एकद्वित्र्यादिलघुगुरुक्रिया सर्वेषु ज्ञेयेति सूचिमेरुप्रस्तारः। गुरुलघुसंख्यासूचकत्वात् सूचिः, मेरुसंस्थानत्वाच्च मेरुरिति। अथ प्रस्तारे कृते सर्वगुरुः कुत्र स्थानेऽस्ति तदपेक्षयैकन्यूनगुरुः कुत्रास्ति ततोऽप्येकन्यूनगुरुः कुत्रास्ति इत्येवं प्रकारे प्रश्ने तत्स्थानज्ञानार्थं पताकाप्रस्ताराः कथ्यन्ते, यत्संख्याक्षरप्रस्तारे प्रश्नस्तदक्षरसंख्याकान् कोष्ठानेकाधिकान् लिखित्वान्तेषु द्विष्टवदेकाङ्कादारभ्योत्तरोत्तरद्विगुणा अङ्का देयाः। ततः प्रथमाङ्केन द्व्यादीनां संयोजनं कृत्वा द्व्यङ्कादधः कोष्ठ-कान् कृत्वा तेषु संयुक्ताङ्कान् लिखेत्। अन्तिकेन प्रथमाङ्को न योज्यः, तावत्संख्यस्य तस्य वृत्तस्याभावात्। ततो द्वितीयाङ्कं तृतीयकोष्ठाङ्कै-रुपान्त्यपर्यन्तैः संयोज्य तृतीयकोष्ठाधः कोष्ठकान् कृत्वा तेषु लिखेत्। द्वितीयाङ्ककोष्ठाधःस्थैरप्यङ्कैस्तृतीयकोष्ठस्थितचतुरङ्कं संयोज्य तस्यामेव पंक्तावधो लिखेत्, एवं चतुरङ्कमष्टादिभिः संयोज्याष्टमाङ्कोऽधो लिखेत्, तदधोऽपि चतुरङ्काधः पंक्तिस्थैरष्टमाङ्कं संयोज्य लिखेत्, एवं सर्वत्र यावद-ङ्कसमाप्ति लेख्यम्। एव क्रियमाणे यत्र प्रस्तारसंख्याधिकसंख्यापद्यते सा न लेख्या॥ एकत्र लिखिता चापरत्र न लिखितव्या किन्तु तदग्रिम-संख्यायोगस्तदधः संख्यायोगो वा कार्यः। एवं सर्वत्र। तथा च प्रथमस्थाने सर्वगुरुः द्वितीयपंक्तिस्थेषु द्वितीयादिस्थानेषु विवक्षितसर्वगुरुमध्ये एकं

न्यूनं कृत्वा तावद्गुरुकभेदस्थानानि। एवं तृतीयादिपंक्तिषु एकैक-
गुरुन्यूनप्रस्तारस्थानानि। यद्वा प्रथमः सर्वगुरुः द्वितीयपंक्तावेकलघु-
स्थानानि, तृतीयपंक्तौ द्विलघुस्थानानीत्यादि ज्ञेयम्। तदुक्तं "एको द्वावथ
चत्वारस्ततोऽष्टाविति वर्धनम्। पूर्वं परेण संयोज्य तदधो लेखयेद् बुधः॥
अन्तिमाङ्कावधिं नैव लङ्घयेदत्र कुत्रचित्। एकत्र लिखितं प्राज्ञः पुन-
रन्यत्र नो लिखेत्॥" अत्रोदाहरणमेकाक्षरे १। २ अस्य द्विविकल्पत्वादेक-
स्थानस्य एकगुरुः द्वितीयस्य एकलघुरिति। एतावतैव सिद्धिः। द्व्यक्षरे
यथा, १.२.४. अत्रैकाङ्कद्व्यङ्कयोः संयोजने त्र्यङ्को द्व्यङ्काधो लेख्यः, तस्य
चतुर्विकल्पत्वात् तावतैव सिद्धिः। प्रथमस्थानस्य एकः सर्वगुरुः, द्वितीय-
तृतीयस्थानस्यौ एकगुरु एकलघु वा, चतुर्थस्थानस्य सर्वलघुरिति त्र्यक्षरे
यथा, १. २. ४. ८. अत्र पञ्चाङ्कस्य चतुरङ्कयो-
जनं न कार्यं, ३. ६. नवमभेदाभावात्। तेन त्र्यङ्कस्य चतु-
रङ्कस्य संबन्धे ५. ७. सप्त षडधो निवेश्या इति।

चतुरक्षरे पताका यथा।

अत्रैकं द्वाभ्यां १ २ ४ ८ १६ सह त्रयं
द्व्यङ्काधः, एकं चतु- ३ ६ १२ भिः सह पञ्च
त्र्यङ्काधः, एकाष्टयोगे नव ५ १० १४ पञ्चाधः, द्विचतुर्योगे
षट् चतुरधः, द्व्यष्टयोगे दश ९ ७ १५ षडधः, द्विषोडशयोगो
न कार्यः। त्रिचतुर्योगे सप्त दशाधः ११ पञ्चचतुर्योगे नव एकत्र लि-
खितत्वान्न लेख्याः, त्र्यष्टयोगे १३ एकादश सप्ताधः, त्रिषो-
डशयोगो न कार्यः। पञ्चाष्टयोगे त्रयोदश एका-दशाधः, चतुरष्टयोगे
द्वादशाष्टाधः, चतःषोडशयोगो न कार्यः, षडष्टयोगे चतुर्दश द्वादशाधः,
दशाष्टयोगो न, सप्ताष्टयोगे पञ्चदश चतुर्दशाधः। अत्र प्रथमस्थाने सर्वगुरुः,
द्वित्रिपञ्चनवस्थाने त्रिगुरवः एकलघवो वा, चतुःषड्दशसप्तैकादशत्रयोदशसु
स्थानेषु द्विगुरवो द्विलघवो वा, अष्टद्वादशचतुर्दशपञ्चदशस्थानेषु एकगुरुस्त्रिल-
घवो वा षोडशस्थाने सर्वलघुरिति योजना।

पञ्चाक्षरपताका यथा,—

| | | | | | |
|---|---|---|---|---|---|
| १ | २ | ४ | ८ | १६ | ३२ |
| | ३ | ६ | १२ | २४ | |
| | ५ | १० | २० | २८ | |
| | ९ | १८ | १४ | ३० | |
| | १७ | ७ | २२ | ३१ | |
| | | ११ | २६ | | |
| | | १९ | १५ | | |
| | | १३ | २३ | | |
| | | २१ | २७ | | |
| | | २५ | २९ | | |

षडक्षरपताका यथा,—

| | | | | | | |
|---|---|---|---|---|---|---|
| १ | २ | ४ | ८ | १६ | ३२ | ६४ |
| | ३ | ६ | १२ | २४ | ४८ | |
| | ५ | १० | २० | ४० | ५६ | |
| | ९ | १८ | ३६ | २८ | ६० | |
| | १७ | ३४ | १४ | ४४ | ६२ | |
| | ३३ | ७ | २२ | ५२ | ६३ | |
| | | ११ | ३८ | ३० | | |
| | | १९ | २६ | ४६ | | |
| | | ३५ | ४२ | ५४ | | |
| | | १३ | ५० | ५८ | | |
| | | २१ | १५ | ३१ | | |
| | | ३७ | २३ | ४७ | | |
| | | २५ | ३९ | ५५ | | |
| | | ४१ | २७ | ५९ | | |
| | | ४९ | ४३ | ६१ | | |
| | | | ५१ | | | |
| | | | २९ | | | |
| | | | ५३ | | | |
| | | | ४५ | | | |
| | | | ५७ | | | |

अनयोरेकद्व्यादिगुरुस्थानं पूर्ववदेव वक्तव्यम् इति पताकोदावनिका।

## अथ मात्रामेरुप्रस्तारः।

तत्रैककलद्विकलत्रिकलादि- १ षु कति सर्वगुरवः कति चैक-
गुर्वादय इति बुभुत्सायां १ १ तदवबोधार्थं तत् प्रस्तावः
यथा, उपर्य्येककोष्ठं लिखि- २ १ त्वा तदधः कोष्ठद्वययुक्ति-
द्वयं तदधः कोष्ठत्रय- १ ३ १ युतं पंक्तिद्वयं ततः
कोष्ठचतुष्टययुतं पंक्ति- ३ ४ १ द्वयं इत्येवंरूपेण
यावदिच्छयैकैकैकको- १ ६ ५ १ ष्ठं वर्धयित्वा पं-
क्तिद्वयं लेख्यम्। ४ १० ६ १ एवं कृते उपरि
कोष्ठके द्वयं एका- १ १० १५ ७ १ ङ्को देयः, स-
र्वपंक्त्यन्त्यको- ५ २० २१ ८ १ ष्ठे च स एव
देयः, पं- १ १५ ३५ २८ ९ १ क्त्यादि
कोष्ठेषु ६ ३५ ५६ ३६ १० १ एकान्तरेण
द्वया १ २१ ७० ८४ ४५ ११ १ द-
यो- ७ ५६ १२६ १२० ५५ १२ १ ऽङ्का
१ २८ १२६ २१० १६५ ६६ १३ १
८ ८४ २५२ ३३० २२० ७८ १४ १

वृद्ध्या देयाः यथा प्रथमपंक्तिप्रथमकोष्ठे प्रथमाङ्कः द्वितीयपंक्त्याद्यकोष्ठे द्वितीयाङ्कः तृतीयपंक्त्यादेत्र एकाङ्कः चतुर्थपंक्त्यादेत्र त्र्यङ्कः तत एकः ततश्चतुष्टयमिति क्रमेणाद्यकोष्ठपूरणे सतीति, एवमाद्यन्तकोष्ठपूरणे कृते समानकोष्ठद्वयमध्ये उपरि पंक्तिमध्यस्थितशून्यकोष्ठेषु पूरणीयकोष्ठोपरिस्थकोष्ठद्वयाद्यकोष्ठाङ्केन तदुपरिस्थितकोष्ठाग्रिमकोष्ठाङ्कमेकीकृत्य योऽङ्कस्तं दद्यात्। द्वितीयपंक्तिमध्यस्थकोष्ठे तु पूरणीयकोष्ठोपरिस्थकोष्ठाङ्केन तदुपरिस्थितकोष्ठद्वयमध्येऽन्त्यकोष्ठाङ्कमेकीकृत्य दद्यात्। एवं कोष्ठपूरणे कृते प्रथमकोष्ठे एककलस्य न्यासः, द्वितीयपंक्तौ द्विकलस्य, तृतीयपंक्तौ त्रिकलस्य, चतुर्थ्यां चतुष्कलस्य, पञ्चम्यां पञ्चकलस्येत्येवं न्यासः। तत्रैककले एक एव सर्वलघुरेकलघुरूपः, द्विकले एकः सर्वगुरुरेकगुरुरूपः एकः सर्व-

लघु द्विलघुरूपः, त्रिकले सर्वगुर्वभावात् द्वौ लघू एकगुरुः एकः सर्वलघुः, चतुष्कले सर्वगुर्वात्मक एकः एकगुर्वात्मकं त्रयं सर्वलघुरेकः, पञ्चकले सर्वगुर्वभावात् द्विगुर्वात्मकं त्रयं एकगुर्वात्मकं चतुष्कं सर्वलघुरेकः, षष्ठ्यां षट्कलेषु एकः सर्वगुरु षट् द्विगुरवः पञ्चैकगुरवः, एकः सर्वलघुरित्येवं ज्ञेयम्। तत्तत्पंक्त्यङ्कानेकीकृत्य तत्तत्संख्या च ज्ञेया, यथा, षट्कले एक-षट्-पञ्चैकाङ्कानां मेलने त्रयोदश प्रागुक्ता भेदा भवन्ति, एवमन्यत्र॥ इति मात्रामेरुप्रस्तारः।

खण्डमेरुः।

यद्वा मात्रावृत्तेषु कत्येकगुरवः कति द्विगुरव इत्यादिज्ञानार्थं खण्डमात्रामेरुः कार्यः। यथा, उपर्येकः कोष्ठो लेख्यः, तदधो दक्षिणतो वामतो वातिक्रान्तैककोष्ठं कोष्ठद्वयवत् पंक्तिद्वयं, तदधस्तथैव कोष्ठत्रयवत् पंक्तिद्वितयं,

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| | | | | | | | १ | १ |
| | | | | | | १ | १ | २ |
| | | | | | | २ | १ | ३ |
| | | | | | १ | ३ | १ | ५ |
| | | | | | ३ | ४ | १ | ८ |
| | | | | १ | ६ | ५ | १ | १३ |
| | | | | ४ | १० | ६ | १ | २१ |
| | | | १ | १० | १५ | ७ | १ | ३४ |
| | | | ५ | २० | २१ | ८ | १ | ५५ |
| | | १ | १५ | ३५ | २८ | ९ | १ | ८९ |
| | | ६ | ३५ | ५६ | ३६ | १० | १ | १४४ |
| | १ | २१ | ७० | ८४ | ४५ | ११ | १ | २३३ |
| | ७ | ५३ | १२६ | १२० | ५५ | १२ | १ | ३७७ |
| १ | २८ | १२६ | २१० | १६५ | ६६ | १३ | १ | ६१० |
| ८ | ८४ | २५२ | ३३० | २२० | ७८ | १४ | १ | ९८७ |

तदधस्तस्यैव कोष्ठचतुष्टयवत् पंक्तिद्वयं तदधः कोष्ठपञ्चकोपेतपंक्तिद्वय मितेत्थंप्रकारेण यावदिच्छं कुर्यात्। एवं कोष्ठेषु लिखितेषु कोष्ठवहि-र्निर्गमप्रदेशेऽन्त्यकोष्ठेषु एकद्वि-एकत्रेत्रकचतुरादिक्रमेणैकान्तरेणैकोत्तरष्ट—द्वयाङ्का देयाः, द्वितीयप्रदेशेऽन्त्यकोष्ठेषु सर्वत्रैकाङ्का देयाः। मध्यकोष्ठे तु स्वोपरि कोष्ठाङ्केन तदुपरि कोष्ठपुरःस्थितकोष्ठाङ्कमेकीकृत्य पूर्ववल्लिखेत्। यथा, अत्र प्रथमपंक्तावेकमात्रस्य न्यासः। द्वितीयपंक्तौ द्विकलस्य, तृतीयायां त्रिकलस्येत्थमेत्रवं पूर्ववत् न्यासः। सर्वगुर्वेकगुर्वादिकथनं च पूर्ववदेव कार्यम्। प्रतिपंक्तिप्रस्तारसंख्याज्ञानार्थं तत्तत्पंक्तिस्थान् सर्वानङ्कानेकीकृत्य सिद्धमङ्कमेकाङ्कात् परतो वह्निर्लिखेत्। मात्रामेरौ मात्राखण्डमेरौ च सम्मतिः। आदावेकं न्यसेत् कोष्ठं तदधः पंक्तियुग्मके। द्वौ द्वौ च तदधस्त्रीं स्त्रीनेवंरूपेण वर्धनम्॥ १॥ अन्त्यकोष्ठेषु सर्वेषु प्रथमाङ्कं न्यसेत् सुधीः। आदौ चैकं ततो द्वौ च पुनः स्वैकं ततस्त्रयम्॥ २॥ एकान्तरं च दृष्टाङ्कमेवं रूपेण पूरणम्। मध्यकोष्ठं ततः प्राज्ञः पूरणीयं शिरःस्थितैः॥ ३॥ शिरःस्थितोर्ध्वकाग्राङ्कमेकीकृत्य प्रपूरयेत्। एवं क्रमेण सिद्धः स्यान्मात्रामेरुर्न संशयः॥ ४॥ इति खण्डमात्रामेरुः। अथ क्रमप्राप्तां संख्यामाख्याति।

लगक्रियाङ्कसंदोहे भवेत् संख्या विमिश्रिते। इति

लगक्रियायां पूर्वोक्तायां येऽङ्काः सिद्धास्तेषां समूहे मिलिते योजिते सति योऽङ्कः सा संख्या भवेत्, त्र्यक्षरे यथा, १.३.३.१. एतेषामेकत्रित्रेत्रकाङ्कानां मेलनेऽष्टौ प्रस्ताराः, चतुरक्षरे च १.४.६.४.१. एषामेकचतुःषट्चतुरेकाङ्कानां मेलने षोडश। प्रकारान्तरेण सङ्ख्यामाह।

उद्दिष्टाङ्कसमाहारः सैको वा जनयेदिमाम्॥ ८॥ इति।

पूर्वोक्तानां उद्दिष्टानामङ्कानां सैक एकसहितः समाहारो मेलनं वा अथवा इमां सङ्ख्यां जनयेत् उत्पादयेत् तद्यथा त्र्यक्षरे एकद्विचतूरूपा उद्दिष्टाङ्काः सप्तमेलनेऽष्टौ सा तस्य सङ्ख्या, चतुरक्षरे च एकद्विचतुरष्टाङ्कमेलने १५ सैका षोडश सा तस्य सङ्ख्या। एवं प्रकारद्वयमन्यत्रावधेयम्।

वृद्दस्योपलक्षणं प्रस्तारगणनयापि संख्याज्ञानसिद्धेः, प्रथमवृत्तसंख्या-
द्विगुणोत्तरोत्तरवृत्तसंखेत्यति सिद्धेश्च। अर्धसमविषमयोरपि पूर्वोक्तरीत्या
लगक्रियोद्दिष्टाङ्कमेलनेन संख्या ज्ञेयेति। संग्रहपद्यन्तु संख्याध्वना-
र्थकमेव वक्ष्यते। सूत्रे तु संख्यानयनेऽन्यः प्रकार उक्तः। यथा, यत्संख्यां
जिज्ञासेत तज्जातिनिष्ठाक्षरसंख्याङ्कं भूमौ स्थापिते अर्धमपनयते, अर्ध-
करणे भागद्वयस्य कृतत्वात् तद्धि संख्या लब्धा तान् पृथक्कृतत्र भूमौ स्थाप-
येत्। अवशिष्टार्धसङ्ख्या यदि समा ततस्तस्यामर्धितायां द्व्यङ्कस्य लब्धस्य पूर्व-
लब्धाङ्काधस्तात् न्यासः कार्यः एवमुत्तरत्र, यदा त्वर्धसंख्यादृत्ताक्षरसंख्यैव
विषमा तदा द्वीकरणाशक्तेरेकं रूपमपनीय शून्यं पूर्वलब्धाङ्कादधः
स्थापयेत्। एवमेकपर्यन्तकरणे अधःस्थितशून्यस्थाने एकाङ्कं निधाय
द्विगुणयेत्। तौ द्वौ तस्योपरिष्टादर्धस्थाने निधाय तया संख्यया सैव
गुणनीया, ततो गुणिताङ्कमुपरि स्थाने त्रिः क्षिपेत्, तत्स्थानं यदि शून्यस्य
तत्तदा न्यस्तमङ्कं द्विगुणयेत्, यदि त्वर्धस्थानं तदा तयैव संख्यया गुणयेत्,
एवमुपरिस्थानपर्यन्ते कृते योऽङ्को जातः स दृष्टवृत्तसंख्या ज्ञेयेति।
अत्रोदाहरणं षड़क्षरे गायत्रे षट्संख्यायामर्धेऽपनीते द्व्यङ्के स्थापिते
अवशिष्टास्त्रयस्तेषु रूपमपनीय द्व्यङ्काधः शून्यं स्थाप्यं यथा २।० अव-
शिष्टद्विसंख्यातोऽर्धे ऽपनीते शून्याधो द्विसंख्या लेख्या यथा २।०।२। ततो-
ऽवशिष्टं रूपं तदपनीय द्व्यङ्काधः शून्यं स्थाप्यं यथा २।०।२।० अधः शून्ये
एकाङ्कं द्विगुणं न्यस्य तं द्व्यङ्कमर्धस्थाने स्थितमपनीय तत्स्थाने निधाय तं
तावद्गुणं कुर्यात्, ततो द्वौ द्वाभ्यां गुणितौ चत्वारो भवन्ति तेषामुपरि-
ष्टाच्छून्यस्थाने तं निधाय शून्यस्थानाङ्कत्वाद् द्विगुणयेत् ततोऽष्टौ
भवन्ति तानप्यर्धस्थाने निधाय तावद्गुणान् कुर्यात्, तेनाष्टावष्टभिर्गु-
णिताश्चतुःषष्टि र्भवन्ति गायत्र्यां समवृत्तानि। एवं सर्वत्र समवृत्तसंख्या
ज्ञेया, सा च तत्र तत्र दर्शितैव। यदा तु शुद्धार्धसमवृत्तसंख्यां जिज्ञा-
सेत तदा समसंख्या तथैव गुणनीया सिद्धेऽङ्के समसंख्यां पातयेत्
अवशिष्टा शुद्धार्धसमसंख्या भवति। यथा त्र्यक्षरे समसंख्या ८ तै तैरेव

गुणिताश्चतुःषष्टिस्तन्मध्येऽष्टस्वपनीतेषु षट्पञ्चाशच्छुद्धार्धसमानि। एवं सर्वत्र।
यदा तु तत्तज्जातिषु शुद्धविषमे संख्या जिज्ञासिता तदा संख्यायां तथैव गुणितायां या सञ्जाता तां पुनस्तथैव गुणयेत्, सिद्धेऽङ्के समार्धं समे अपनीय शिष्टा संख्या शुद्धविषमस्य। यथा, त्र्यक्षरे समानि (८) तैरेव गुणने चतुःषष्टिः ६४ पुनरेतयैवैतद्गुणने चत्वारि सहस्राणि षण्णवतिः अङ्कतोऽपि ४०९६। समार्द्धसममेलने ६४ एतेष्वपनीतेषु अवशिष्टं ४०३२ इयं शुद्धविषमसंख्या। यदा तु समार्द्धविषमाणि समुदितानि जिज्ञासितानि, तदा समार्धसमे नापनेये पूर्ववत् तत्संख्या। एवमन्यत्रापि ज्ञेयम्। यदैतज्जात्यन्तानि कति समवृत्तानि इति संख्याजिज्ञासा तदा विवक्षितप्रान्तच्छन्दः समवृत्तसंख्यां द्विगुणयेत् तन्मध्ये द्वावपनयेत् शिष्टा विवक्षितजातिपर्यन्तानां समवृत्तसंख्या यथा चतुरक्षरे षोडश समवृत्तानि तेषां द्वैगुण्ये द्वात्रिंशत् द्वयोरपनये तदन्तानां संख्या ३०। एवमुत्कृते भेदाः षट्कोट्य एकसप्ततिलक्षाणि अष्टौ सहस्राणि अष्टौ शतानि चतुःषष्टिश्चेति अङ्कतोऽपि ६७१०८८६४ एतद्द्वैगुण्ये द्वयोर्न्यूनिः त्रयोदश कोट्यो द्वाचत्वारिंशल्लक्षाः सप्तदश सहस्राणि सप्त शतानि षड्विंशत्यधिकानि अङ्कतोऽपि १३४२१७७२६। एतावन्ति सर्वाणि समवृत्तानि। तदुक्तम् "विवक्षितान्तजातेस्तु भेदा द्विगुणितास्ततः। द्विहीनाः सर्वसंख्यायां ते स्युरेकादिजा इति"। अथाध्वयोगमाह॥

संख्यैव द्विगुणैकोना सद्भिरध्वा प्रकीर्तितः। इति।

या समादिवृत्तानां तत्तज्जातिषु संख्या पूर्वमुक्ता सा द्विगुणा एकोनेति स सद्भिः प्रस्तारादिज्ञैरध्वा वृत्तप्रस्तारव्याप्यः प्रदेशस्तत्तज्जातिषूक्तः स्वस्वग्रन्थेषु। त्र्यक्षरे यथा संख्याष्टरूपा द्विगुणा षोडश एकोना पञ्चदश भवन्ति सोऽयं तस्य अध्वा पञ्चदशाङ्गुलायां भुवि तद्वृत्तं प्रस्तार्य इति भावः। चतुरक्षरेऽपि तथाकरणे एकत्रिंशत् स तस्य। एवमर्द्धसमविषमयोः उह्योऽर्थं उपपत्तिमाह।

वृत्तस्याङ्गुलिकी व्याप्तिरधः कुर्यात्तथाङ्गुलिम्॥ ८॥ इति।

वृत्तस्य वृत्तप्रस्तारस्य व्यासतो व्याप्तिरङ्गुलिमिता, वृत्ताधश्चाङ्गुलिं कुर्यात् त्यक्तामिति शेषः अङ्गुलायामा गुरुलघवः कार्याः प्रस्तारान्तरालश्चाङ्गुलिमितमेव कार्यमितत्यर्थः। अत्र चोद्दिष्टाङ्कलेखनाय मध्येऽङ्गुलावस्थापनं अङ्गुलन्यूनाधिकपरिमाणानां गुरुलघूनामुद्दिष्टाङ्कानां च लेखनं सम्भवेऽपि अननुगतस्याशास्त्रार्थत्वादगुणमिति सिद्धत्यर्थमङ्गुलिनियमनं कृतं नतु व्यसनिमात्रतया। न च प्रथमप्रस्तारेऽप्युद्दिष्टकरणायोपर्यङ्गुलमितभूमिग्रहे पूर्णैव द्विगुणा संख्याध्वा स्यात् नत्वेकोनेति वाच्यम्। प्रथमस्य सर्वत्र सर्वत्र स्वसर्वगुरुत्वेनैव नियमादुद्दिष्टकरणानपेक्षणात्। न चैवमन्तिमस्यापि सर्वलघुत्वेन ज्ञातत्वादूना द्विगुणा संख्या अध्वा स्यादिति वाच्यम्। कोऽयवधिकलघुप्रस्तारेषु सर्वलघोः सामान्यत अन्यत्वज्ञानेऽपि कतिथोऽयमिति विशेषाज्ञाने गणनाव्यतिरेकेणापि तावत्सङ्ख्याक इति ज्ञानार्थमुद्दिष्टकरणापेक्षणात्। एतेनैतदपास्तं यत् केचिदाहुः 'षष्ठः प्रत्ययोऽध्वयोगपरिच्छित्तिरितेरके' सोऽल्पफलत्वात् पुरुषेच्छानुविधायित्वेनानियतत्वाच्च नोक्त इति। सङ्ख्याध्वनोः संग्रहपद्यम् :—"सैकोद्दिष्टाङ्ककूटाल्लगकरणगताङ्कैर्विमिश्रैः परेषां पूर्वद्वैगुण्यतो वा भवति गणनया प्रसृतीनां च सङ्ख्या। वृत्ते वृत्तान्तरे चाङ्गुलिपरिमितता स्यात्तदेकेन हीना संख्येव द्विः कृताध्वा विधिरयमुदितो भट्टनारायणेन।" इदानीं निर्व्यूढप्रतिज्ञाभारो ग्रन्थकारः स्वग्रन्थे श्रोतृभिः प्रवृत्तिविशेषः कार्य इति सूचनार्थं स्ववंशपित्रादिगुणप्रतिपादनपूर्वकं ग्रन्थकृतिमुपसंहरति ॥

संशेऽभूत् कश्यपस्य प्रकटगुणगणः शैवसिद्धान्तवेत्ता
विप्रः पवेत्रकनामा विमलतरमति वेदतत्वार्थबोधे।
केदारस्तस्य सूनुः शिवचरणयुगाराधनैकाग्रचित्त-
श्छन्दः नाभिरामं प्रविरचितमिदं वृत्तरत्नाकराख्यम् ॥ १० ॥ इति।

काश्यपस्य महर्षेर्वंशेऽन्वये गोत्रे प्रकटः प्रसिद्धो गुणसमुदायो यस्य स तादृशः पवेत्रकाख्यो विप्रो ब्राह्मणोऽभूत्, कीदृक् शिवो देवता येषां ते शिवपूजकाः शैवास्तत्सिद्धान्तस्य वेत्ता ज्ञाता शैवागमवेत्तेत्यर्थः। तथा वेदानां

तत्त्वार्थस्याबोधितस्यार्थस्य बोधे ज्ञाने निर्मलतरबुद्धिस्तस्य पत्र्येकस्य पुत्रः केदारनामा कीदृक् शिवचरणयुगलसेवामात्रैकाग्रचेतास्तेन केदारेणाभिरामं मनोज्ञं संक्षेपेणैव लक्ष्यलक्षणयोरभिधानात् ग्रन्थान्तरेभ्योऽतिशयवत्, वृत्तरत्नाकरनामकं छन्दः छन्दःशास्त्रप्रकरणं प्रविरचितं कृतं । यद्यपि कर्तरि चेति कर्त्रर्थतृजन्तस्य षष्ठ्या सह समासो निषिद्धस्तथापि जनिकर्तुः प्रकृतिरिति ज्ञापकेन निषेधस्यानित्यताज्ञापनात् । शैवसिद्धान्तवेत्तेति षष्ठीसमासः । केचित्तु तृनन्तेन समास इति । तन्न तृनो योगे न लोकाव्ययनिष्ठाखलर्थतृनामिति षष्ठीनिषेधात् ॥ इति सर्वं मनोहरम् ॥ भट्टश्रीनागनाथात् समजनि विबुधश्चाङ्देवाख्यभट्टः प्रासोष्टासौ तनूजं रघुपतिनिरतं भट्टगोविन्दसंज्ञम् । विश्वामित्रान्ववायाम्बुधिविधुरधिकं वर्धते तत्तनूजो विद्याब्धौ लब्धपारः प्रथितपृथुयशा भट्टरामेश्वराख्यः ॥ १ ॥ नारायणेन सुधिया काश्यां निवसता सता । वृत्तरत्नाकरे टीका तद्भुवा रचिता चिता ॥२॥ ग्रन्थेऽस्मिन् गुणगणवत्त्वमुच्यते चेत् स्वं कार्यं गुणगणवन्न मन्यते कः । तत् सन्तः शिरसि कृताञ्जलिस्तु याचे शोधन्तत् सदसदिहोदितं मया यत् ॥ २ ॥ याति विक्रमशके द्विखषड्भू १६०२ संमिते सितगकार्तिकरुद्रे । ग्रन्थमूर्तिसुकृतं किल कुर्मो रामचन्द्रपदपूजनपुष्पम् ॥

इति श्रीविद्वन्मुकुटमाणिक्यश्रीभट्टरामेश्वरसूरिसूनुनारायणभट्टविरचितायां वृत्तरत्नाकरटीकायां प्रस्ताराध्यायः षष्ठः समाप्तः ॥

---

१०।१२। यथा स्नातुमवतीर्णा उद्भ्रान्तमुक्तसितम शुकार्द्धान्तम्।
तथा च स्नाता असि त्वं स्वच्छे गोदानदीतोये॥

—२१ "इह्निआरा विन्दुआ एओ सुङ्गा वसमिलिआवि।
रह वङ्गणस जोए परे असेस वि सविहास।,, प्रा०. पि०. ५।

—२३। प्रा०. पि०. ६। मानिनि माने. किं फलमेष यच्चरणमिलितः कान्तः। सहजेन भुजङ्गमो यदि नमति तत्र किं क्रियते मणिमन्त्रैः॥ "एओ,, इत्यत्र एअ इति "मिल," इत्यत्र पडु इति, "तह किं करिअ" इत्यत्र कि करिअए इति च मूलसम्मताः पाठाः। तत्रैवं व्याख्या "एष यदि" "पतितः" "किं कुरुतः"। अयं बारेन्द्री भाषा इति रविकर.।

३१।२। "जहि दीहोवि वस्रो लहु जिह्वा पठइ होइ सोवि लहु।
वस्रोवि तुरिअपठिओ दोत्तिम्मि वि एक्क जाणेहु॥" प्रा०. पि०. ८।

८०।१५। सकलस्त्र हम्मगाङ्कत्वयि गुणरमणाम्बरे उदितः।
मिलितापरप्रबोध शिथिला मा भवतु प्रार्थना एषा॥

—१७। श०५।२६।

८१।२। हरनयनसमुत्थज्वालो वह्निः (मदनं) ज्वालयामास, रतिनयनजलौघैः भस्मशेषम् जहे। तथापि दहति चेतो मामकं किं करोमि मदनशिरसि भूयः अग्नि र्लग्न इति किं वरीयः॥

—१६। होहि गाहु मत्तचउअण तथा गाहाइ सत्ताइवणा। तेंह विगाह पलट्टि किज्जइ उगा हउ सट्टिकल॥ गाहिणिअ वासट्टि दिज्जइ तह विपलट्टइ सीहिणी॥ वेअ गाहो (वा) सट्टि सत्तेरुओ असोणगण खन्दमत्त चोसट्टि। (प्रा० पि० ५१)

—२१। चन्द्रश्चन्दनहारः तावद्रूपं प्रकाशयत।
चण्डेश्वरस्य कीर्त्ति र्यावदात्मानं न दर्शयति॥ प्रा० पि० ५२।

—२४। प्रथमं द्वादशमात्राः विरामः अष्टादशभिः संयुक्ता।
यथा प्रथमं तथा तृतीयं दशपञ्चविभूषिता गाथा॥ प्रा० पि० ५४।

८२।५। पूर्णेत्यत्र चूर्णा प्रा०. पि०.।

—७। तेरहलहुआ विप्पा एआइसेहि खत्तिनी भणिआ।
सत्ताइसा वेसी सेसा सा सुद्दिनी होइ। प्रा० पि० ६४।

—८। एक्के जे कुलवन्ति वेणाअक्केहि होइ सङ्गहिणी। णाअकहीणा रण्डा वेसा वहुणाअका होइ। प्रा० पि० ६३। जा पढमतीअपञ्चमस त्तमठाणेहि होइ गुरुमज्भा। गुव्विणी गुण-रहआ गाहदोसं पआसेइ॥ प्रा० पि० ६५।

—१५। परिहर मानिनि मानं प्रेक्षस्व कुसुमानि नीपस्य।
तव कृते खरहृदयो म्टह्णाति गुलिका धनुषि किल कामः॥ प्रा०. पि०. ६७।

—१८। श्रुत्वा यस्य नाम अम्बुनयने सम्मुखं रुणद्धि।
भण वीर चेदिपते नो प्रेक्षेत्र मुखं कथं यथेच्छं तस्य। प्रा० पि० ६८।

—२२। मुञ्च सुन्दरि पादम् अर्पय हसित्वा सुमुखि खड्गं मे।

कल्पयित्वा म्लेच्छशरीरं प्रेक्षिष्ये वदनं तव भुवनहम्मीरः॥ प्रा० पि० ७१।

—२४। वर्षति कनकस्य वृष्टिं तपति भुवने दिवानिशं आग्रतम्।

निःशङ्कं साहसाङ्को निन्दति इन्द्रं च सूर्यबिम्बं च। प्रा० पि० ७२।

६३। १। य यमानयति गिरिं रविरथचक्रपरिघट्टनसहं हनुमान्।

तं तं लीलया नलो वामकरोत्तोलितं रचयति समुद्रे॥ प्रा० पि० ७४।

—५। चान्द भहउ सेस सारङ्ग सिव वम्ह चारण वरुण।

नील मउण तालङ्क सेहर सर गअण सरक्ष विमइ।

खीर णअरु णरु णिङ्घ णेहण मअगण भोलइ।

सुद्ध सरि कुम्भ कलस ससिहर सुणक्ष अट्ठाइस खन्धाण॥ प्रा० पि०७५।

—८। चन्द्रः कुन्दः काशो हारः हंसास्त्रिलोचनः कैलासः।

यावद् यावत् श्वेतं तावत् काशीश जितं ते कीर्त्त्या॥ प्रा० पि० ७७।

—१४। सुरतरुः सुरभिः स्पर्शमणिः न हि वीरेशसमानः।

एते वल्कले कठिनतनुः पशुः पाषाणः॥ प्रा० पि० ७६.

—१७। प्रा० पि० ८०।

—२०। यस्य अर्द्धाङ्गे पार्वती शीर्षे गङ्गा वसति। यो देवानां वल्लभः वन्दे पादं तस्य॥ प्रा० पि० ८२

—२२। प्रा० पि० ८३.

६४। २। प्रा० पि० ८६ (उक्कच्छा)

—७। विमुखचलितो रणे अचलः परिहृत्य हयगजघटाः।

हल्लहलायमानः मलयन्नृपतिः यस्य यशस्त्रिभुवनं पिवति।

वाराणसीनरपते लुलितं सकलमुपरि यशः स्फुरितम्॥ प्रा० पि० ८७.

—११। पदभरदर्मरिता (वसुधा) धरणी, तरणि भूजधूलिभि लुप्तः।

कमठपीठं (भङ्गपड़ितं) मेरुमन्दरशिरः कम्पितम्।

क्रोधेन चलितः हम्मीरवीरो गजयूथयुक्तः।

कष्टेन कृत आक्रन्दो मूर्च्छितो म्लेच्छपुत्रः॥ प्रा० पि० ६२।

—१५। प्रा० पि० ६३।

६४। १८। कस्य चलने कूर्मश्चलति पृथिव्याः शरणं कूर्मे चलति मही चलति भुवनभयकरणा।

मह्यां चलन्त्यां महीधराः तथा च सुरगणाः चक्रवर्त्तिचलने चलति चक्रं यथा त्रिभुवनम्।
प्रा० पि० ६६।

—२१। प्रा०, पि० ६७।

—२५। यस्य शीर्षे गङ्गा गौरी अर्धाङ्गे ग्रीवायां पिनद्धः फणिहारः,

कण्ठे स्थितं विषं परिधानं दिशः सन्तारयति संसारात्, किरणावलिकन्दः बद्धचन्द्रो

नयनेऽनलः स्फुरति स मङ्गलं ददातु बहु सुखं करोतु तव भवानीकान्तः। प्रा० पि० ६८।

६५। ४। भात इति रविकरः। प्रा० पि० १००।

—६। रणे दक्षो दक्षो हतः जितः कुसुमधनुः अन्धकगन्धमपि नाशं चकार।
स रक्षतु शङ्करः असुरभयङ्करः गौरीनार्यर्धाङ्गधरः। प्रा० पि० १०१।

—८। प्रा० पि० १०२।

—१०। येन बद्धा शिरसि गङ्गा हतोऽनङ्गः अर्द्धाङ्गे परिकरं (भार्य्यां) धरति।
स योगिजनमित्रं हरतु दुरितं शङ्काहरः शङ्करचरणः॥ प्रा० पि० १०३।

—१२। प्रा० पि० १०४।

—१७। परिधाय दृढसन्नाहं वाहोपरि पक्खरं (कवचं) दत्त्वा बन्धूनां संमत्या रणं धर्षयामि स्वामि-हम्मीरवचनं गृहीत्वा। उड्डयामि नभः पन्थानं भ्रमामि खड्गं रिपुशिरसि भ्राटयामि-पक्खरे पक्खरे पातयित्वा पर्वतमुत्फालयामि हम्मीरकार्य्ये जज्जल्लः (तन्नामा सेनापतिः) भणति क्रोधानलो मुखमध्ये ज्वलति, सुलतानशिरसि करवालं दत्वा त्यक्त्वा कलेवरं दिवं चलति। प्रा० पि० १०५।

—२५। यथा शारदशशिबिम्बं यथा हरहारहंसाः स्थिताः। यथा फुल्लसितकमलं यथा श्रीखण्डखण्डो दृश्यते यथा गङ्गाकल्लोलः यथा रमणीयं रूप्यम्। यथा दुग्धवरशुभ्रफेणं स्फुरितं लुप्यते, प्रियपातप्रसाददृष्टिपतितः निभृतं हसति यथा तरुणीजनः, वरमन्त्रिन् चण्डेश्वर तव तव कीर्त्तिं दृश्यते हरिब्रह्मा भणति॥ प्रा० पि० १०७।

८६। ८। प्रा० पि० ११२,११३।

—१४। यस्य करे फणिपतिर्वलयः तरुणीवरा तनुमध्ये विलसति।
नयने अनलः गले गरलं विमलः शशधरः शिरसि निवसति।
सुरसरिच्छिरोमध्ये वहति सकलमनोदुरितदलनकरः।
हसित्वा शशधरधरो हरो हरतु दुरितं तव दिशतु अभयवरम्॥ प्रा० पि० ११०।

—१७। प्रा० पि० १५।

—१८। प्रा० पि० ११६।

—२०। प्रा० पि० ११७।

—२२। जाया जाता अर्धाङ्गे शीर्षे गङ्गा लोलन्ती। सर्वाशां या पूरयन्ती सर्वं दुःखान्तं नेत्री। अग्रे ताराधारी दिशो भासा भासयन्। वेताला यस्य सङ्गे नृत्ये दुष्टं नृत्यन्ति। गायन्ति कान्ता उद्धतालैः भूमिकम्पनम्। यद्दृष्टे मोक्षः प्राप्यते स युष्माकं सौख्यं ददातु। प्रा० पि० ११८।

८७ ३। प्रा० पि० १२२।१२३। इह शालशरभसकलमृगमन्दकलकलमृतावोत्यत्र क्रमेण शाण-भ्रमरमकरमन्दकरजलमलयपाठाः।

—१३। यदा यदा गर्जित्वा गरुड़ो वहिरेति उद्दण्डाण्डजाः सभयाः पलायन्ते।
उरुविक्रमविक्रमजनितजूः (क्रोधः) तस्य तत्क्षणपराक्रमं को न बुध्यते॥ प्रा० पि०। १२५।

—१६। अलिङ्गहो अप्रयोजकशाचकाद् अलशब्दात् इक्षप्रत्ययः अप्रत्ययस्येति रविकरः॥

—१६। जर्फि आसामविदे हक्रिक्षामि सुस्थिरडाहरराजं जित्वा गृहाण।

कालिञ्जरं जित्वा कीर्त्तिं स्थापय धनमर्जयित्वा धर्मं अर्पय ॥ प्रा० पि० १२७।

—२५। भ्रमति मधुकरः फुल्लारविन्दे नवकिंशुककाननपूरिताः सर्वदेशाः। पिक एव श्रूयते, शीतलपवनो लघु वहति। मलयकुहरे नववल्लीं त्यिम्रा चित्तं मनोभूः शरैर्हन्ति दूर-दिगन्तरे कान्तः केन प्रकारेण आत्मानं धारयामि एवं परिमीलितो दुरन्तः (कालः) ॥ प्रा० पि० १३२।

९८। ११। भयभग्ना वङ्गा भग्नाःकलिङ्गाः तैलङ्गा रणं मुक्त्वा चलिताः। महाराष्ट्राः स्तिमिता लग्ना कष्टाः सौराष्ट्राः भयेन पदे पदे पलायिताः। चम्पा रणकम्पा पर्वताः कम्पिता उत्थाय उत्थाय जीवं हरति। काशीश्वरो राजा कृतप्रयाणो विद्याधरो भणति मन्त्रिवरः। प्रा० पि० १२६।

—१९। ढोलं ताड़यित्वा दिल्लीमध्ये मूर्च्छयित्वा म्लेच्छशरीराणि पुरो जज्जलो मल्लवरश्चलति वीरो हम्मीरः। चलिते वीरे हम्मीरे पादभरेण मेदिनी कम्पते दिशो मग्ना अन्धकारे धूली सूर्यरथं झम्पयति (छादयति) दिशो मग्ना अन्धकारे अनन्तरं खुरसानकाः उत्सन्ना, प्रमथितो विपक्षः ताड्यते दिल्लीमध्ये ढोलः। प्रा० पि० १२९।

—२६। भग्ना मलयचोलपतयः चलिता गर्जित्वा गुर्जराः।
मालवराजो मलयगिरौ लुक्कायितः परिहृत्य कुञ्जरान्।
खुरसानाः स्खलिताः रणमर्दमहिताः लङ्घिताः सागराः।
हम्मीरे च चलिते हृताः (भग्नाः) पलायिताः रिपुगणाः कातराः ॥ प्रा० पि० १४२।

९९।५। दानवा देवा विस्मयाक्रान्ताः गिरिवरशिखराणि कम्पितानि।
हयगजपादघातोत्थितधूलिभि गगनं लुप्यते। प्रा० पि० १४६।

—८ मही ललति अहिः पलायते गिरिस्खलति हरः स्खलति शशी निद्राति अमृतं वमति भग्नो जीवित्वा उत्थितः। पुनर्धर्षति, पुनः स्खलति पुनर्ललति पुनस्खलति पुनर्निद्राति अमृतं वमति विविधपरिदृष्टैः। प्रा०, पि०, १४९।

—१२। फुल्लितमधुभ्रमरवधूः रजनि यत्र किरणवक्षुः अवतरति वसन्तः।
मलयगिरिकुसुमधरपवनवहः सहे कति भण सखि निजो नास्ति कान्तः ॥ प्रा०, पि०, १५२।

—१६। वर्षति जलं भ्रमति घनः मलयशीतलः पवनो मनोहरणः कनकपिञ्जरनिचिता विद्युत् फुल्ला नीपाः प्रस्तरविस्तरो हेलति खेलति नभस्तलं न आवेद्यते। प्रा० पि० १५५।

—२१ राजा लुब्धसमाजः खलः, बहुकलहकारिणः सेवकाः धूर्त्ताः।
जीवनं वाञ्छसि सुखे यदि परिहर गृहजनं बहुरणयुक्तम्। प्रा० पि० १५८।

—१४। स मानी पुण्यवान् यस्य भक्तः पण्डित स्तनयः।
यस्य गृहिणी गुणवती सोऽपि पृथिव्यां स्वर्गनिलयः। प्रा० पि० १६०।

१०० १। उच्चोत्थानकं विमलगृहं तरुणी गृहिणी विनयपरा। पुनर्वित्तपूर्णा मुदारा वर्षा-संमदसौख्यकराः। प्रा० पि० १६१।

—२। यस्य चन्द्रः शीर्षे परिधानं च दिशः। स शम्भुः पातु महासुखं ददातु ॥ प्रा० पि० १६५।

५। सुन्दरी गुर्जरनारी लोचनं दीर्घ विसारि। पीने स्तनभारे लोलते मति हार । प्रा॰ पि॰ १६७।

—८। राजानो भग्नाः दिगन्तरलग्नाः परिहृत्य हयगजगृहरमणीः।

रुदितभरसरोवराः पतितनिजपरिकरा लोटन्ते पतिततनयो धरणग्राम्।

पुनरुत्तिष्ठन्ति सम्भृत्य करदत्ताङ्गुलिबालतनयकरकमलधराः।

काशीश्वरो राजा नेह लुक्कायितो भव, कुरु मायां पुनराक्रमत्र धरिष्यति॥ प्रा॰ पि॰ १६६।

—१३। यस्य हस्ते करबालः विपक्षकुलकालः। शिरसि च वरच्छत्रं संपूर्णं सश्रीमान्॥ प्रा॰ पि॰ १७१।

—१५। जहि जर्जरगुर्जरशाकदलं दलदर्पितवञ्चितम् महाराष्ट्रबलम्।

बलमौलितमालवराजकुलं कुरु उच्चां कुलच्छविं कर्मपूरैः॥ प्रा॰ पि॰ १७४।

## Corrections.

५।७ त्रिशत (शत). ७।१४. सतोष्ट (सतो ष्ट). ८।७ मध्येजत्री (मध्ये जेत्रा). १०।४ र्भवेत् (भवेत्). ११।१२ त्रिशत (शत). १२।६ चतुरूर्ध्वं (चतुरर्धं). १३।६ पुराणे(पुराचेत्र)। २४ छन्दः (छन्दः). १५।६ ननननाः (नननाः). २४।२२ मबादि (मवादि). ३०।१२ इसो (स्म); १३ अ ण्हाश्रा. ३१।२५ पद (पाद). ३२।८ रामावमा (रामा वामा) १० मञ्जरी—पि(मञ्जरी पि)। ११ पादा (पद्रा) १८ तुरक्ते (तुरक्ते।). ३३।४ सङ्गमेवा—(सङ्गमे वा)। ५ रुञ्झित (रुञ्झित) ८ वक्त्रं-(वक्त्रं). पूर्णेन्दु (पूर्णेन्द्र) १० पूर्वादि (पवादि) १४ र्वा। (र्वा). ३५।४ समविषमात्मकं (समात्मकं). ३६।२३ द्यनुक्ते (द्रुरक्ते). ४२।२३ त्रिगणान्त (त्रिगणानान्त). ४३।२ तृतीयामू (तृतीयामू) १३ ५।१२। (५।१२). ४४।२५ विकल्पाः। (विकल्पाः). ४५।१७ मार्यागीतिः (मार्या गीतिः) १८ इतरत् (इतर). ४६।२६ पीनोन्नत (पीतोन्नत). ४७।२० समेऽष्टौ (समेऽष्ठौ). ४८।४ to १० त्रयोदश विकल्पाः ऽऽऽऽ, ऽऽऽ।।, ऽऽ।।ऽ, ऽ।।ऽऽ, ।।ऽऽऽ, ऽऽ।।।।, ऽ।।ऽ।।, ऽ।।।।ऽ, ।।।।ऽऽ, ।।ऽऽ।।, ।।ऽ।।ऽ, ।।ऽ।।।।, ।।।।ऽ।।. एते आर्याभिवर्णक्रमेण निबद्धाः कैश्चित्। मीनाङ्काः १ सुरसन्नैः २ पङ्कजसौ ३ रभितजलाः ४ ततसारस ५ खगसंभृत ६ सज्जनमुदि ७ तवनकुकभि ८ एते विषमे पादे। हंसस्मेरा १ अलिके नद्यो २ नीरजवक्त्राः ३ कुवलयनेत्राः ४ सुस्वच्छजलाः ५ सुतरङ्गभुजाः ६ केशरदशना ७ राजन्ते कृत ८ जनहर्षा भुवि ९ शारदरात्रिषु १० विमलनिशाकर—५१।१८ सत्राद् (स्याद) १६ व्याखेत्रयं

(व्याखेत्रय). ५२।२४ नैव (नैव।) ५६।२ षोड़शलघु (षोड़श लघु) २१ ॥ ऽ, (॥,) २३ समचित्ता (सम चित्ता). द्वयं ॥ऽ, (द्वयं). ५७।६ द्वितीये (॥ द्वितीये). ५८।२ प्रथमपादे (प्रथम पादे) ९ इत्तिकृत् (इतिकृत्). ६१।१ वत्पादद्वयघटितार्धद्वय (वत् पादद्वयघटितार्धं द्वय) ६७।११ कथिता म्भौ (कथिताम्भौ). ६८।१३। जै र (जैर). ७०।१३ भाषिणी (भाविणी). ७१।१५ छित् (च्छदित्) २२ गिति शर (गितिशर). ७२।२ नननननसै ७३।११ जसयला (उसयला). ७४।१२ सुधा तर्कं (सुधातर्कं). ७५।५. खषड़्भि (खषड़्भि) १७ मेतत्॥ (मेतत्). ७६।७ द्वादश॥ (द्वादश) ।९ * अभि- हतिः, P. ७९।२१ ज्गौ ग् (ज्गौ). ८०।१९ जरगाश्च (रगाश्च). ८१।९ ननभभाः समकेऽपि (नन रभाः समेकेऽपि). ८५।९ कः। (कः) १२ द्वितीयेनैकं (द्वितियेनैं). ८६।१२ नसयुक्तौ (नसंयुक्तौ). ८७।११ तादृशाः (तादृशाः) २३ दश धर्मं (दशधर्मं). ८८।२२ मनः (मन). ८९।२५ का- श्मीर, M. (काश्मीर. P.) ९०।२ रौपेन्द्रं (रैपेन्द्रं) ७ यतिः। (यतिः) १८ अ (ए) २० मौ मूढ़ (मौमूढ़) २१ मा ा (माजा) २२ आपवू। (आपवू). ९१।२४ राहृ संयुत्ता (राहृ संयुक्ता) ९२।२३ घु अहं (घु अह). ९३।३ आर्यागीतिः (आर्या गीतिः) ४ द्विषष्टिलघु (षष्टिलघु) १९ उन्द्र र (उन्द्र). ९४।१६ इन्द्र (इन्द्र) इति रोला (इतिरोला). ९५ ।९ धाता—(धातो). ९६।२२ लोलन्तो (लोलन्तीया). १००।६ त्यणञ (त्यनञ) १०२।१३ प्रस्तार (प्रस्तर). १०४।१३ पादार्धसम (पादार्ध सम). १०६।१७ पूर्ति (पूति). १०८।२ निवर्तत (निवर्तत।) ११०।५ भंगे लब्धं (भंगे लब्धं) ६ गुरवः (गुरव ६, षट्) ११२।१६. १२ (२१) २२ चतुःषोड़श (चतुःषो ड़श) ११७।२ द्विगुणो (दिगुणो).

## A. Distinguishing poetry from prose.

Seperate poetry from prose in the following passages.

(1) इषे त्वोर्जे त्वा वायव स्थोपायव स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्वमघ्निया देवभागमूर्जस्वतीः पयस्वतीः प्रजावतीरनमीवा अयक्ष्मा मा वस्तेन ईशत माघशंसो रुद्रस्य हेतिः परि वो वृणक्तु ध्रुवा अस्मिन् गोपतौ स्यात बह्वीर्यजमानस्य पशून् पाहि ॥, t. I.1.1.

(2) ततः प्रविशतो रामलक्ष्मणौ ।

रामः । सौमित्रे ! ननु सेव्यतां तरुतलं चण्डांशुरुज्जृम्भते ।

लक्ष्मणः । चण्डांशो र्निशि का कथा रघुपते ! चन्द्रोऽयमुन्मीलति ।

रामः । वत्सैतद्विदितं कथन्नु भवता ।

लक्ष्मणः । धत्ते कुरङ्गं यतः ।

रामः । क्वासि प्रेयसि हा कुरङ्गनयने चन्द्रानने जानकि ?, Pra. vi. 1.

(3) माधवः । सोऽहञ्च सुन्दरि शिरः कमलार्चनेन ।

त्वामेव लब्धुमभिरोद्धुमना भवानीं । कण्ठे हठेन प्रदर्शयन् ।

तमेनमधिषि करेण खड्गं ।

मल्लिका । ससम्भ्रमं । महाभाग मामा साहसमणु चिट्ठहि । इति हस्तं रुणद्धि ।

माधवः । सस्मितं । आक्रन्दितेन तव भीरु निवारितोऽस्मि, Mar. p. 178.

(4) क्रीडतस्तस्य वृत्तिः कथं जायते योऽपि भाविजगद्वेधसा तेजसः कल्पितः प्रतिक्षणं दिव्यगीतक्षणो नृत्यलोलो गणेशैः स्वप्रणत्यक्षणः सिंहनादाकुले गण्डशैलेऽस्तजक्रन्तजाले वृहत्सालताले क्षणे फुल्लनानातमालालिकाले क्षणं वृक्षमूले विलोलोमराले क्षणे स्वल्पपङ्के जले पङ्कजाढ्येऽक्षणं मातुरङ्के शुभे निष्कलङ्के ॥, Mat. 153. 577.

## B. Arrangement of verses.

Arrange the following verses according to their feet.

(1) आ त्वेता नि षीदतेन्द्रमभि प्र गायत । सखायः स्तोमवाहसः ॥, r. I.5.1

(2) विषूचेरतु कृन्तती पिनाकमिव बिभ्रती ।
विष्वक्पुनर्भुवा मनोऽसमृद्धा अघायवः ॥, a. 1. 27. 2.

(3) प्रथममुनिकथितमवितथ-
मवलोक्य ग्रन्थविस्तरस्यार्थम् ।
नातिलघुविपुलरचना-
भिरुद्यतः स्पष्टमभिधातुम् ॥, V. m. 2.

(4) नित्योदकी नित्ययज्ञो पवीतो
नित्यस्वाध्यायी पतितान्नवर्जी ।
ऋतौ गच्छन् विधिवच्च जुह्वन् ब्राह्मण-
श्च्यवते न ब्रह्मलोकात् ब्रह्मलोकादिति ॥, Vas. p. 472.

(5) वाष्पायमाणनयनविनिवेदितशोकभारः
चरणनिपतितेन भ्रमरकेण सप्रार्थनं किमपि निवार्यते । Mar. iv. 18½.

(6) स्वेदाम्भःकणभिन्नभीषणतरभ्रूभङ्गमेकं रुषा त्रासेना-
परमुत्प्लुतोत्प्लुतमृगव्यालोलनेत्रोत्पलम् ।
उत्पश्यन्नहमग्रतो मुखमिदं देव्याः प्रियाया स्तथा
भीतस्योत्सुकमानसस्य महति क्षिप्तोऽस्म्यहं सङ्कटे ॥ Pri. iii. 16.

(7) जननि भुवने चङ्क्रमेऽहं कियन्तमनेहसं
पुरुषकरभ्रष्टैर्दुष्टैर्घनैरुदरम्भरिः ।
तरुणकिरणे तन्द्राम्भून्ये तरङ्गयलोचने नमति मयि ते
किञ्चित् काञ्चीपुरीमणिदीपिके ॥, Stu. 28.

(8) अष्टौ व्याकरणानि षट् च भिषजां व्याचष्ट ताः संहिताः
षट् तर्कान् गणितानि पञ्च चतुरो वेदानधीते स्म यः !
रत्नानां त्रितयं द्वयञ्च बुबुधे मीमांसयोरन्तरं सद्ब्रह्मैक
मगाधबोधमहिमा सोऽस्याः कविर्भास्करः ॥, Li. 250.

(9) कामन्दकीमकरन्दौ । सहर्षं । हा धिक्कष्टमाश्चर्यमाश्चर्यं ।
किमयमसिपत्रचन्दनरसच्छटासारयोर्युगपदवपातः,
अनलस्फुलिङ्गकलितः किमयमनभ्रः सुधावर्षः ।
सञ्जीवनौषधिविषव्यतिकरमालोकतिमिरसम्भेदं,
अद्यविधिरशनिशशधरमयूखसम्बलनमनुकुरुते ॥, Ma. x. 10—1.

## C. Corrections of mistakes.

Apply the rules of prosody to point out mistakes in the following.

(1) इदं जम्बूकुञ्जस्खलितजलझात्कारलहरी
गभीरायाः सिन्धोर्मुदितस्य विहगध्वानिनितटे ।
क्रमोद्गाढानङ्गज्वरविधुरकर्णाटयुवती
कपोलापाण्डु द्राग्दलति रुचिरं कैतकदलम् ॥, Mar 9. 51.

(2) ऊरू करेण परिघट्टयः सलीलं
दुर्योधनस्य पुरतोऽपहृताम्बरा या ॥
दुःशासनस्य करकर्षणभिन्नमौलिः
सा द्रौपदी कथयत क्व पुनः प्रदेशे ॥, Ve. vi. 35.

(3) आभाति रत्नशतशोभितशातकुम्भ-
स्तम्भावसिक्तपृथुभूमौलिकदामरम्यं॥
अध्यासितं युवतिभिर्विजिताप्सरोभिः ।
प्रेक्षागृहं सुरविमानसमानमेतत् ॥, Pri. iii. 2.

(4) नादस्तावद्विकलकुररीकूजितस्निग्धतार-
श्चित्ताकर्षी परिचित इवश्रोत्रसंवादमेति ।
अन्तर्भिन्नं भ्रमति हृदयं विह्वलत्यङ्गमङ्गं,
देहस्तम्भः स्खलति च गतिः कः प्रकारः किमेतत् ॥, Ma. v. 20.

(5) परिभ्रमसि किं वृथा क्व च न चित्तं विश्राम्यतां
स्वयम्भवति यद्यथा भवति नान्यथा तत्तथा ।
अतीतमपि न स्मरन्नपि च भाव्यं सङ्कल्पयन्
त तर्कितगमागमाननुभवस्व भोगानिह ॥ Vai. 60.

(6) पौलस्त्रावयवौघसङ्कटभुजामूलव्रणोन्मूलित-
द्वैराजग्राममरावीं विदधते वीराय तस्मै हरिः ।

मित्यालोकन कौतुकव्यसनिनीः शङ्के सहस्रं दृशः
पिण्डीकृत्य दलच्छलेन कनकाम्भोजस्रजं दत्तवान् ॥, An. v. 32.

(7) राकाचन्द्रसमानकान्तिवदना नाकाधिराजस्तुता
मूकानामपि कुर्वती सुरधुनीनीकाशवाग्वैभवम् ।
काञ्चीनगरी विहाररसिकाशोकापहन्त्री सता-
मेका पुण्यपरम्परा पशुपतेराकारिणी राजते ॥ Stu. 12.

(8) भास्वद्वंशावतंसकीर्तिरमणीरङ्गप्रसङ्गस्वनद्-
वादित्रप्रथमध्वनिर्विजयते वल्मीकजन्मा मुनिः ।
पीत्वा यद्वदनेन्दुमण्डलगलत्काव्यामृताब्धेः किम-
प्याकल्पं कविनूतनाम्बुदमयी कादम्बिनी वर्षति ॥ Pra. I. 9.

(9) चञ्चच्चञ्चूग्रकृत्तच्युतपिशितलवग्राससंहृष्टगृध्रैर्-
गृध्रैराबद्धपक्षद्वितयविधुतिभिर्बद्धसान्द्रान्धकारे ।
वक्त्रोद्वान्ताः पतन्त्यः श्रमितशिखिशिखाश्रेणयोऽस्मिन् शिवानाम्
अस्रस्रोतस्यजस्रस्रुतिबहलवसा वासविस्रे स्वनन्ति ॥ Na. iv. 66.

(10) दूरात् प्रोत्सार्यमाणपरशरनिकरज्ज्वालकीलाभिघात-
प्रभ्रश्यद्वाजिवर्गभ्रमणनियमनव्याकुलव्यग्रसूतः ।
लेढि प्रौढो हुताशः कृतलयसमयाशङ्कमाकाशवीथिं
गङ्गासूनुप्रमुक्तप्रथितहुतवहास्त्रानुभाव प्रसूतः ॥ Dha. 58.

(11) यस्योच्चण्डासिदण्डप्रहतिविदलितैर्वैरिवर्गैरलक्ष्य-
च्छिन्नास्त्रोद्भ्रान्तवीरप्रतिबलकलनाशून्यसंग्राममार्गे ।
जीवत्संस्कारशक्त्या भुवि चरति चिरात्कृत्तबन्धं कबन्धे
दत्तो देवीभवद्भिः सह सुरकुसुमैरात्मनःसाधुवादः ॥ B. r. iii. 42

## D. Rules of Prosody.

Restore the correct text of the following rules.

(1) म्नो गिति पङ्क्तिः ॥ C. m. 6.

(2) दीपकमाला म्भौ मता जगौ ॥ V. r. p. 64.

(3) प्रमुदितवदना भवेत् नौ रसाविति लक्षणात् ॥ Ki. c. 18.16.

(4) पञ्चमुनि म्भौ सात् सयुता ललना ॥ २२ ॥ V. r. p. 66.

(5) द्रुतपदं २४ भवति न भयाश्चेत् ॥ V. r. p. 67.

(6) न न त त गुरुभिश्चन्द्रिकाऽश्वर्त्तभिः ॥ C. m. p. 19.

(7) यस्मिन् सर्वे गा राजन्ते ब्रह्माद्यं तद्रुपं नाम ॥ V. r. p. 70.

(8) सूर्याक्षैर्मगणः सजौ स्तमयुतौ शार्दूलललितम् ॥ २१ ॥ V. r. p. 71.

(9) मो गौ नौ तौ गौ स्वरहयतुरगैः फुल्लदाम प्रसिद्धम् ॥ C. m. p. 32.

(10) अस्मिन्नेव तृतीयके यदा तजराः सुत्रः
प्रथमे च विरतिरार्षभं ३ ब्रुवन्ति ।
तच्छद्मविराट् ४ पुरःस्थितं त्रितयमपरमपि यदि पूर्वसमं स्यात् ॥ V.r.p.79

---